॥ श्रीः ॥

# ॥ शिवाकाण्डताण्डवम् ॥

श्रौतस्मार्त्तकर्मतत्परचातुर्मास्ययाजिनो
द्विवेदपण्डितश्रीद्देवनाथशर्मणो
निदेशानुसारिणाऽनुजेन

द्विवेदश्रीरामनाथशर्मणा

काशीस्थराजकीयप्रधानपाठालयात्, पण्डित-
...मुकुन्दशर्मणः, स्वगेहाच्च समासा-
...पञ्चाशदधिकनिबन्धग-
...राधनादुपज्ञातम् ।

...भक्तानामवलोकनाय

काशिककाशिकायन्त्र

आरोपितम् ।

सं० १९४३ फा० कृ० ८ बुधे ।

॥ श्रीः ॥

# ॥ शिवाकाण्डताण्डवस्य भूमिका ॥

शिवदेव्यास्तपोमूर्त्तेर्मातुः पादाब्जजन्मनः ।
पितुः श्रीविश्वनाथस्य कणाँल्लेह्म्यादरान् मुहुः ॥

हेमाद्रिमाधवमुखैः सुविचार्यमाणो
योऽर्थो विरोधपदवीं न जहौ चिरेण ॥
तत्रापि नैजमतिवैभवदर्शनाय,
यद्याग्रहो मतिमतां किमतोऽपि वाच्यम् ॥ १ ॥
प्राच्याः किमार्यरघुनन्दनमेव धर्म-
तत्त्वज्ञमाहुरथ वा मिथिलानिवासाः ॥
वाचस्पतिप्रभृतिकान्न परान्निबन्धान्
यद्दाक्षिणात्यरचितान् क्व चन स्पृशन्ति ॥ २ ॥
किन्त्वप्रतिष्ठितवितर्कमिमे विहाय
धर्मं स्ववर्ग्यगदितं परिपालयन्ति ॥
एवन्तु सर्वमनुजैर्निजधर्मशास्त्र-
सत्त्वे परस्य समुपेक्षणमेव कार्यम् ॥ ३ ॥
निर्णायकं न यदि लभ्यत आत्मवर्ग्य-
शास्त्रं तदा परवचोऽभ्युपगम्यमेव ॥

तत्रान्तरङ्गबहिरङ्गविचारणा स्या-
दावश्यकी निजनिबन्धविरोध एवम् ॥ ४ ॥
एवं क चिद् ग्रन्थबहुत्वसङ्ख्यया
क चिन्तु युक्त्या क चिदाप्तवाक्यतः ॥
क चिन्तु लोकात् क चिदात्ममानसा-
न्निश्चीयते सूक्ष्मगतिर्यतो वृषः ॥ ५ ॥
ग्रन्थानां तारतम्यज्ञाः पण्डिता एव नेतरे ॥
तेऽप्याग्रहात्प्रवर्त्तेरन् लुप्ता धर्मकथा तदा ॥ ६ ॥

इत्यादि विभावयतस्तु नैव प्रसरेल्लेखन्यणुमात्रलेखेऽपि, तथापि नैषा मे लेखनी शिवरात्रिनिर्णिनीषया प्रावर्त्तिष्ट, तन्निर्णयस्य माधवाचार्यादिभिरेव विशदीकृतत्वात् । नापि प्राचीनग्रन्थोक्तविषयपरीचिक्षिषया, तत्परीक्षाया अतिसूक्ष्मबुद्धिसाध्यत्वेन स्थूलधियस्तत्र प्रवृत्तेर्हास्यमात्रसाधकत्वात् । नापीदानीन्तनविद्वज्जनबुबोधयिषया, विद्वज्जनानामनाग्रहित्वे स्वत एव सारासारविवेकपटुतरमनीषासहायेनानायासत एवातिसूक्ष्मतरविषयबोधस्यापीपत्करत्वेन प्रस्तुतस्थूलतरविषयावबोधा-

योपायान्तरानुधावनस्याशक्यसार्थक्यात्, तेषामाग्रहित्वे तु तदाग्रहस्य (अज्ञः सुखमाराध्य) इति न्यायेन ब्रह्मणाप्यनिराकरणीयतया प्रत्युत तद्बोधनोद्यतस्य (स्थानभ्रष्टा ययुः खगाः) इतिरीत्या हानिमात्रसाधकत्वात्।

नापीदानीन्तनार्यमहाराजादिपदवीमलंकुर्वाणानां सन्तुतोषयिषया, तेषु केषांचित्सन्तोषस्य वैषयिकविविधेन्द्रियतर्पकपदार्थसार्थसाध्यत्वेन धर्मनिर्णायकग्रन्थार्थविचारस्य तदसाधकत्वात् १. केषांचिच्च स्वीयोन्नत्यवनतिविमर्शनिमग्नमानसतया प्रस्तुतविषयश्रवणानवकाशात् २. केषांचिच्च स्वस्ववाक्स्तावकजनवचनेनैव सन्तोषोदयेन तद्विरुद्धवाक्प्रतिवचनेप्यनाश्वासात् ३. केषांचिच्च स्वस्मिन्नेव लोकोत्तरबुद्धिविद्याभिमानितया तन्निर्णयविपरीतयाज्ञवल्क्यादिनिर्णयेऽप्यस्वारस्यदृढप्रत्ययस्याऽप-

 

नोदीपायस्याद्ययावदप्रसिद्धेः ४. केषां चिच्च कुत्र चिद्व्यक्तिविशेषे ग्रन्थविशेषे वाकस्मिकश्रद्धागौरवभरातिरेकेण तद्विरोधिनो युक्तिमतोऽपि वचनस्याकर्णनेऽपि नरकसाधनत्वस्य दृढप्रत्ययात् ५. केषां चिच्चेदानीन्तनपण्डितंमन्यदुराग्रहदुर्विलसितनानाविधविप्रतिपद्यमाननिःसारबहुलतरवचनलेख - प्रतिलेखादिश्रवणे मानसव्यग्रतातिरिक्तफलाजनकत्वस्यानेकशोऽनुभूतचरत्वेन पण्डितसम्बन्धिकथानामश्रवणे झटिति लोकोत्तरारुच्युदयस्य युक्ततरत्वात् ६. केषां चिच्च रामानुजादिसम्प्रदायानुगतार्वाचीनतत्तद्विशेषाचारेष्वेव श्रद्धातिशयेन प्राचीनस्मार्त्तधर्मोपेक्षणविलोपोद्योगयोरेव स्वीयमतप्रचारोपायत्वस्य दृढनिश्चयात् ७. केषां चिच्च स्मार्त्तधर्मरसिकानामपि संस्कृतवागपरिचयेन तर्क्कानिविष्टमनीषतया चाल्पीयसा कालेन तर्क्कबहुलनिर्णयावबोधस्या-

साध्यत्वगृहात् ८. केषां चिच्च धीमतामपि श्रावयितुरल्पमनोषतयागृहितया वा तत्तद्ग्रन्थविपरीतार्थश्रावणस्यैवैतल्लेखार्थश्रावणस्यापि प्रत्युत विपरीतार्थसाधकत्वात् ९. केषां चिच्च ब्राह्मधर्मार्यधर्मादिष्वेव सुखसाधनत्वदृढनिश्चयेन पुराणादिष्वेवोन्मत्तप्रलपितत्वनिर्णयेन तन्मूलकग्रन्थकारविचारेषु जनुर्वैयर्थ्यसम्पादकताप्रत्ययस्य दुष्परिहरत्वात् १०. केषां चिच्च संवादपत्त्रश्रवणप्रचारादावेवासाधारणलोकोपकारकत्वं निश्चिन्वताम्, समाजस्थापनवर्द्धनाधिपत्यादिष्वेवानुत्तमप्रतिष्ठासम्पादकत्वमभ्युपगच्छताम्, वर्त्तमानसमयान्यदेशीयसम्राड़धिकृतान्यदेशीयजनत्राग्व्यवहाराहारविहारपरिपाटीपरिपालनानुवर्त्तनपरिस्तवनादावेव माहेन्द्रपदलाभोपयोगित्वं द्रढ़यताम्, बहुतरक्लेशसञ्चितद्रव्यव्ययात्यायाससाध्यविविधोपाधिलाभ एव परम-

पुरुषार्थत्वं प्रकटयताम्, स्वस्वाभिलषितसिद्धेरेव वर्षशतायुषाप्यतिदुष्करतया तदतिरिक्तशारीरस्नानभोजनादिष्वप्यनास्थयेव प्रवर्त्तमानानां प्रस्तुतविषये प्रवृत्तेरशक्यसम्भावनत्वात् ११।

अत एव संवादपत्त्रसंपादकत्वादिपदं महाशयपदं महाजनपदं धर्माधिकरणाधिकृतपदं राजनियुक्तपदं कुलीनपदं मौलपदं वा विभूषयतां मनःसन्तुतोषयिषयापि न प्रावृतदियं मे लेखनी।

किं तु ये के चन परलोकादधर्माद्वा बिभ्यति, सदुक्तिं वा शुश्रूषन्ते, स्मार्त्तपौराणादिवचस्सु वातिष्ठन्ते, स्वस्मादप्यन्यं कं चन प्रतिभावन्तं वा मन्यन्ते, हृष्यन्ति वा शत्रुमुखनिस्सृताभ्योऽपि श्रवःप्रविष्टाभ्यः सदुक्तिगर्भाभ्यो वाग्भ्यः, क्लिश्नन्ति वा पित्रादुदीरिताभिरप्यागृहप्रधानाभिर्वाणीभिः, भजन्ति वा चतुर्वर्गचिन्तामणिं शूल-

पाणिम्, श्रद्दधति वा पुराणोक्तेऽपि शिवरात्रिव्रते, पश्यन्ति वालौकिकदृष्ट्या शिवरात्रिभोजनादौ प्रत्यवायातिरेकम्, निश्चिन्वति वैशानसंहितादुक्तां शिवरात्रिव्रतस्य सदाशिवसायुज्यादिसम्पादकताम्, धावन्ति वा तिथिद्वैधे धर्मलोपभयाद्विद्वद्गेहेषु, व्यामुह्यन्ति वानास्थया विद्वद्भिरप्युदीरितासूच्चावचकथासु, मृगयन्ते वा तिथिनिर्णायकान् महामान्यान् निबन्धान्, जानन्ति वा गुरुवृद्धादिशुश्रूषातिरेकेण निबन्धमर्मनिस्सारणपरिपाटीम्, निर्द्धारयन्ति वा कुतूहलेनैव ग्रन्थकाराणामप्याग्रहात्प्रवृत्तिं धर्मनिर्णिनीषया वा प्रवृत्तिम्, परितप्यन्ति वा शृण्वन्तोऽपि च निर्णायकग्रन्थनामान्यायस्यापि तल्लाभेऽलाभाच्च तेषां निबन्धानाम्, उपदिशन्ति वाधिकारणे निर्णीय धर्मविषयान्, पृच्छन्ति वा महात्मनो गुरून् स्वधर्मबुद्ध्या धर्मविषयान्, उपवस-

न्ति वा प्राणात्ययसङ्कटेऽपि शिवरात्रिदिने, तेऽनेकग्रन्थानां सञ्जिघृक्षयावलुलोकयिषया वा माक्षिक्षन्निति यथालाभं बहूनां ग्रन्थानां शिवरात्रिप्रकरणनिर्गलितार्थौ यथामति बोद्धॄणां प्रतिपत्तिसौकर्यायासङ्कीर्णं संगृह्य शिवाकाण्डताण्डवाख्यवर्णसमुदायं विन्यस्य साम्बसदाशिवपदयोरुपायनीकर्त्तुमुपक्रमते। तत्र चास्याश्चापल्यान्मध्येमध्ये ग्रन्थकारोक्तीनां विमर्शनेऽपि स्याच्चेत्कुत्रापि प्रवृत्तिः सा नाग्रहप्रधानजनविधृतत्वमूलिकापि त्वत्यल्पज्ञजनविधृतत्वमूलिकैवेत्येतावता सर्वान्तर्यामी सदाशिवस्तत्तुल्यमान्याः साध्वसाधुविवेकनिपुणा धीमन्तश्च क्षमध्वं प्रीयन्तां चेत्यभ्यर्थयते।

काशिकागस्त्यकुण्डवीथीस्थचातुर्मास्ययाजिद्विवेदपण्डित-
श्रीदेवनाथशर्माज्ञावशंवदस्तदनुजः
श्रीरामनाथशर्मा।

॥ श्रीः ॥

॥ अथ शिवाकाण्डताण्डवस्य प्रथमं विलसितम् ॥

तत्र कालमाधवस्य शिवरात्रिप्रकरणे प्रदर्शिता विषयाः ।

[१] अयं हि शिवरात्रिशब्दः ( तस्य रात्रिः समाख्याता शिवरात्रिः शिवप्रिया ) इत्यादिस्कन्दपुराणादिवचनप्रदर्शितावय - वार्थं पुरस्कृत्य शिवसम्बन्धिरात्रिमात्रे, ( शिवरात्रिव्रतं नाम सर्वपापप्रणाशनम् ) इतीशानसंहितादिवाक्योपोद्बलितं शिवस्य प्रिया रात्रिर्यस्मिन्व्रतेऽङ्गत्वेन विहितेत्यव-यवार्थमनुसृत्य शिवसम्बन्धिव्रतमात्रे च प्र-वर्त्तमानं (माघमासस्य शेषे या प्रथमा फाल्गुनस्य च । कृष्णो चतुर्द्दशी सा तु शि-वरात्रिः प्रकीर्त्तिता ) इतिनागरखण्डादि-

वाक्यप्रदर्शितरूढ़िमहिम्ना रात्रिविशेषे, तत्सम्बन्धिव्रतविशेषे च न प्रोक्षणान्यायेन यौगिको, न वाहीनन्यायेन रूढोऽपि तु निर्मन्थ्यन्यायेन योगरूढः ।

[२] इदं च व्रतं (जन्तुर्जन्मसहस्रेषु भ्रमते नात्र संशयः) इत्यादिस्कन्दपुराणादिप्रदर्शिताकरणप्रत्यवायस्मरणेन, ( वर्षेवर्षे महादेवि ) इत्यादितत्रत्यवीप्सया, (मुमुक्षुः पूजयेन्नित्यम्) इत्यादितत्रत्यनित्यशब्दमहिम्ना, (निश्चलं हि शिवव्रतम्) इत्यादितत्रत्यनिश्चलशब्दस्वारस्येन च नित्यम्। (सर्वान् कामानवाप्नोति प्रेत्य चेह च मानवः) इतीशानसंहितादिप्रदर्शितफलस्मरणेनैकादशीजयन्तीव्रतवत्संयोगपृथक्त्वन्यायेन काम्यं च ।

[३] अस्मिंश्च व्रते ( आचाण्डालमनुष्याणां भुक्तिमुक्तिप्रदायकम् )इत्यादीशानसंहितादिवाक्यात् सर्वेषामधिकारः ।

[४] एतद्व्रताधिकारिणो नियमा अहिंसासत्यब्रह्मचर्यदयाक्षमाशान्तात्मताक्रोधहीनतातपस्वित्वाऽनसूयकतागुरुपादाऽनुगत्वादयः स्कन्दपुराणे दर्शिताः।

[५] एतद्व्रतस्वरूपत्वं च (उपवासप्रभावेण बलादपि च जागरात्। शिवरात्रेस्तथा तस्य लिङ्गस्यापि च पूजया) इत्यादिनागरखण्डाद्यवगतस्य पूजोपवासजागरणस्य समुच्चितस्यैव न प्रत्येकम् न वा प्रत्येकसमुच्चितयोर्विकल्पितम्, वैश्वानरविद्योपासनन्यायविरोधात्। इतरनिरपेक्षस्यैकैकस्योपवासादेर्विधायकानि (अखण्डितव्रतो यो हि शिवरात्रिमुपोषयेत्। सर्वान् कामानवाप्नोति)(कश्चित्पुण्यविशेषेण व्रतहीनोऽपि यः पुमान्। जागरं कुरुते तत्र स रुद्रसमतां व्रजेत्)(यः पूजयति भक्त्येशमनेकफलतां व्रजेत्) इत्यादिस्कन्दपुराणादिवाक्यानि त्ववयुत्यानुवादरूपेण। (अथ

वा शिवरात्रिं च पूजाजागरणैर्नयेत् ) इत्यादीनि पक्षान्तररूपेण बोधकानि वाक्यानि चाशक्तविषयकतया योजनीयानि। अत एव नोपवासादीनां त्रयाणां परस्परमङ्गाङ्गिभावोऽपि त्वाग्नेयषड्यागवत्सम-प्राधान्यमेव । प्रत्येकं कालफलयोः सम्बन्धविधानादङ्गाङ्गिभावबोधकप्रमाणाभावाच्च ।

[३] अस्मिंश्च व्रते न व्रतान्तरवत्तिथेरुदयकालव्यापित्वमस्तमयकालव्यापित्वं वा ग्राह्यताप्रयोजकम्, (उदयेऽन्विताः क्वचिद् ग्राह्याः क्व चिदस्तमयेऽन्विताः । व्रतिभिस्तिथयो यस्माद्वर्जयित्वा व्रतं त्विदम् ) इत्यादीशानसंहितादिवाक्यात् । किन्तु (त्रयोदश्यस्तगे सूर्ये चतसृष्वेव नाडिषु । भूतविद्धा तु या तत्र शिवरात्रिव्रतं चरेत्) इतिवायुपुराणवचसा (प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी । रात्रौ जागरणं य-

स्मात्तस्मात्तां समुपोषयेत् ) इति स्मृत्यन्तरवाक्येन (आदित्यास्तमये काले अस्ति चेद्या चतुर्दशी । तद्रात्रिः शिवरात्रिः स्यात्सम्भवेदुत्तमोत्तमा ) इति कामिकवचनेन च प्रदोषव्यापित्वम्, (अर्द्धरात्रयुता यत्र माघकृष्णचतुर्दशी । शिवरात्रिव्रतं तत्र सोऽश्वमेधफलं लभेत्) इतिनारदसंहितोक्तवचसा (भवेद्यत्र त्रयोदश्यां भूतव्याप्ता महानिशा। शिवरात्रिव्रतं तत्र कुर्याज्जागरणं तथा) इतिस्मृत्यन्तरवाक्येन ( माघकृष्णचतुर्दश्यामादिदेवो महानिशि । शिवलिङ्गतयोद्भूतः कोटिसूर्यसमप्रभः । तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः । अर्द्धरात्रादधश्चोर्द्ध्वं युक्ता यत्र चतुर्दशी । तत्तिथावेव कुर्वीत शिवरात्रिव्रतं व्रती । नार्द्धरात्रादधश्चोर्द्ध्वं युक्ता यत्र चतुर्दशी । नैव तत्र व्रतं कुर्यादायुरैश्वर्यहानितः । व्याप्यार्द्धरात्रं यस्यां तु लभ्यते या चतुर्दशी ।

तस्यामेव व्रतं कार्यं मत्प्रसादार्थिभिर्नरैः । पूर्वेद्युर्वा परेद्युर्वा महानिशि चतुर्दशी । व्याप्ता सा दृश्यते यस्यां तस्यां कुर्याद्व्रतं नरः । लिङ्गाविर्भावकाले तु व्याप्ता ग्राह्या चतुर्दशी । तदूर्ध्वाधोऽन्विता भूता सा कार्या व्रतिभिः सदा । मम प्रियकरी ह्येषा माघकृष्णचतुर्दशी । महानिशान्विता या तु तत्र कुर्यादिदं व्रतम्) इतीशानसंहितावाक्येभ्यश्च निशीथव्यापित्वं च ग्राह्यताप्रयोजकम् ।

[७] तिथिद्वैधे तु यदि पूर्वेद्युरुभयव्याप्तिः परेद्युश्च प्रदोषमात्रव्याप्तिस्तदा (त्रयोदशी यदा देवि दिनभुक्तिप्रमाणतः । जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्दशी) इति स्कन्दपुराणवाक्येन पूर्वस्मिन्नेवाहनि व्रतमनुष्ठेयम् ॥ १ ॥

यदि तु पूर्वेद्युर्निशीथमात्रव्याप्तिः परेद्युश्चोभयव्याप्तिस्तदा ( निशाद्वये चतुर्दश्यां पूर्वा त्याज्या परा शुभा) इति कामिकत्र-

चनेन परेद्युरेव व्रतमनुष्ठेयम् ॥ २ ॥

पूर्वेद्युर्निशीथमात्रव्याप्तौ परेद्युश्च प्रदोषमात्रव्याप्तौ तु ( कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्दशी । एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् । जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च । पूर्वविद्धैव कर्त्तव्या तिथिभान्ते च पारणम् । श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या । पूर्वविद्धा तु कर्त्तव्या शिवरात्रिर्बलेर्दिनम् । जयन्ती शिवरात्रिश्च कार्यें भद्राजयान्विते ) इति स्कन्दपुराणवचोभ्यः, ( माघफाल्गुनयोर्मध्ये असिता या चतुर्दशी । अनङ्गेन समायुक्ता कर्त्तव्या सा सदा तिथिः) इति नागरखण्डवचनेन, ( अर्द्धरात्रात्पुरस्ताच्चेज्जयायोगो यदा भवेत् । पूर्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियैः ) इति पद्मपुराणवाक्येन, (रुद्रव्रतेषु सर्वेषु कर्त्तव्या संमुखी तिथिः । अन्येषु व्रतकल्पेषु परयु-

क्तामुपावसेत्) इति ब्रह्मवैवर्त्तवचनेन च जयायोगस्य प्राशस्त्यबोधनात्, ( महतामपि पापानां दृष्टा वै निष्कृतिः पुरा । न दृष्टा कुर्वतां पुंसां कुहूयुक्तां तिथिं शिवाम् ) इत्यादिस्कन्दपुराणादिवचनेन दर्शयोगस्य निन्दितत्वबोधनाच्च पूर्वेद्युरेव व्रतादिकमनुष्ठेयम् ॥ ३ ॥

यदा तु पूर्वेद्युर्निशीथादूर्ध्वं प्रवृत्ता परेद्युश्च निशीथादर्वागेव समाप्ता तदा पूर्वेद्युर्निशीथप्रदोषयोरेकत्रापि व्याप्तेरभावात्, परेद्युश्च प्रदोषव्याप्तिसत्त्वात् परेद्युरेव व्रतादिकमनुष्ठेयम् । एतदेवाभिप्रेत्य (माघासिते भूतदिनं कदा चिदुपैति योगं यदि पञ्चदश्या । जयाप्रयुक्तां न तु जातु कुर्य्याच्छिवस्य रात्रिं प्रियकृच्छिवस्य) इति स्मर्यते ॥ ४ ॥

[८] यद्यप्येतद्व्रतमपि व्रतान्तरवदहोरात्रसंपाद्यमथाप्यत्र ( निशि भ्रमन्ति भू-

तानि शक्तयः शूलभृद्यतः । अतस्तस्यां त्रयोदश्यां सत्यां तत्पूजनं भवेत् ) इति स्कन्दपुराणवचनेन ( माघमासस्य कृष्णायां चतुर्दश्यां सुरेश्वर । अहं यास्यामि भूपृष्ठे रात्रौ नैव दिवा कलौ । लिङ्गेषु च समस्तेषु चरेषु स्थावरेषु च । संक्रमिष्याम्यसंदिग्धं वर्षपापविशुद्धये । रात्रौ तस्यां हि मे पूजां यः करिष्यति मानवः । मन्त्रैरेतैः सुरश्रेष्ठ विपापः स भविष्यति ) इति नागरखण्डवचनेन च रात्रेरेव प्राधान्यावगत्या तत्रैव प्रदोषादिव्याप्तिबोधकानां वाक्यानामपि पक्षपातः ।

[९] इयं च चतुर्दशी (त्रयोदशी कलाप्येका मध्ये चैव चतुर्दशी । अन्ते चैव सिनीवाली त्रिस्पृश्यां शिवमर्चयेत्) इति पुराणवचनेन तिथित्रयात्मिका चेदतिप्रशस्ता ।

[१०] एवमियं रविभौमवारयुता शिवयोगयुक्ता च ( माघकृष्णाचतुर्दश्यां रवि-

वारो यदा भवेत् । भौमो वाथ भवेद्देवि कर्त्तव्यं व्रतमुत्तमम् । शिवयोगस्य योगे वै तद्भवेदुत्तमोत्तम् ) इति स्कन्दपुराणवाक्येनातिप्रशस्ता ।

[११] यदा पूर्वविद्धोपोषिता चतुर्दशी परेद्युश्च यामत्रयोर्ध्वगामिनी तदा (उपोषणं चतुर्दश्यां चतुर्दश्यां च पारणम् । कृतैः सुकृतलक्षैश्च लभ्यते वाऽथवा न वा । ब्रह्मा स्वयं चतुर्वक्त्रैः पञ्चवक्त्रैस्तथाप्यहम् । सिक्थेसिक्थे फलं तस्य वक्तुं शक्तो न पार्वति । ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै । संस्थितानि भवन्तीह भूतायां पारणे कृते । तिथीनामेव सर्वासामुपवासव्रतादिषु । तिथ्यन्ते पारणं कुर्याद्विना शिवचतुर्दशीम्) इतिस्कन्दपुराणवचोभिः पूर्वाह्णे चतुर्दश्यामेव परेद्युः पारणं कर्त्तव्यम् । परेद्युर्यामत्रयादर्वागेव चतुर्दश्याः समाप्तौ तु ( तिथ्यन्ते पारणं भवेत् ) इ-

त्यादिप्रागुक्तवचनैः परेद्युश्चतुर्दश्यपगमेऽमायां पारणमिति ।

प्रदर्शितेषु चैषु विषयेषु यद्यपि सर्वत्रैव ग्रन्थकाराणां प्रतिभावैचित्र्याद्धेतुसाध्यदृष्टान्तलेखादिवैचित्र्यमुपलभ्यते । तथापि तिथिनिर्णयविषये यथा परस्परं ग्रन्थकाराणांवैचित्र्यं न तथान्यत्र, तत्रापि दिनद्वये निशीथव्याप्तौ यावान् संरम्भो नेतरत्र तच्छततमांशोऽपीति बुद्धिमतां कुतूहलाय स एव विषयः प्रथमं परिदर्श्यते ।

तत्र ( विज्ञेया शिवरात्रिरित्यसितगा माघे चतुर्दश्यसौ युक्ता चेज्जयया निशीथसमयादूर्ध्वं तदान्त्योदिता । पूर्वैवापरथा स्मृता) इति संगृह्णन्निर्णयदीपिकाकारो निशीथसमयादूर्ध्वं चतुर्दशीयोग एव परा ग्राह्याऽन्यथा तु सर्वथा पूर्वैव ग्राह्येति व्यवस्थापयन् दिनद्वये निशीथव्याप्तौ पूर्वैवेति स्पष्टमेवाचष्ट ।

कालनिर्णयदीपिकाविवरणकारोऽप्युक्तां कारिकामक्षरशो विवृण्वन् मूलोक्तमेव सिद्धान्तमन्वमोदत ।

कृत्यरत्नावलीकारोऽपि ( जयया प्रकर्षेण युक्ताम्, अधिकरात्रिभागव्यापिन्या त्रयोदश्या युक्तामित्यस्यैवार्थस्य प्रशब्दबलात्प्रतीत्या माघासित इतिवाक्यं दिनद्वये निशीथयोगाभाव एव प्रवर्त्तते नान्यथा, एवं पूर्वविद्धाग्राह्यत्वप्रतिपादकवचनानामस्मायुक्तहेयत्वप्रतिपादकवचनानां च दिनद्वये निशीथव्याप्तिविषयतयैव सार्थकयम्, एकस्मिन्नेव दिने निशीथव्याप्तौ तु महानिशाव्याप्तिकचतुर्दशीग्राह्यत्ववचनेनैव तद्ग्रहणसिद्धौ तानि वाक्यानि व्यर्थान्येव भवेयुः, एवं पूर्वविद्धैवेत्येवकारोऽपि दिनद्वये निशीथयोग उभयत्र ग्राह्यत्वप्रसक्तावेव स्वरसत उपपद्यते, नान्यथा, एवं च दिनद्वये निशीथव्याप्तौ माधवतिथितत्त्वकार-

गौरवात्परदिने प्रदोषव्याप्तेः, सङ्कल्पकालव्याप्तेः,दिवारात्र्युभययोगाच्च यद्यपि परदिन एव व्रतादिकं प्राप्नोति, तथापि वचनबलात् पूर्वदिन एव कार्यम्) इति व्यवस्थापयन् दिनद्वयेऽर्द्धरात्रव्याप्तौ पूर्वैवेति निरणैषीत् ।

शैवसुधाकरकारोऽपि कृत्यरत्नावलीकारेणोक्ता एव युक्तीरक्षरशोऽनुवदंस्तत्सिद्धान्तमेवातिष्ठिपत् ।

निर्णयसिन्धुकारस्तु (दिनद्वये निशीथव्याप्ता पूर्वा ग्राह्येति हेमाद्रिः, मदनरत्नेऽप्येवम्, गौड़ा अप्येवमाहुः । प्रदोषनिशीथोभयव्याप्तिसत्त्वात्परैवेति माधवः। इदमेव युक्तं प्रतीमः) इत्यभिदधानो दिनद्वये निशीथव्याप्तौ परस्या एव ग्राह्यतामन्वमोदिष्ट ।

तत्रेदं वक्तव्यम् । माधवनाम्ना प्रदोषनिशीथोभयव्याप्तेः पराग्राह्यत्वे हेतुत्वं य-

दुपन्यस्तं तन्नेदानींतनमाधवीयकालनिर्ण-
यपुस्तकेषूपलभ्यते, उपलभ्यते च (निशाद्व-
ये चतुर्दश्यां पूर्वा त्याज्या परा शुभा) इति
कामिकवचनस्यैव पराग्राह्यत्वहेतुत्वम् ।
किं च यदिदमुभयव्याप्तेः पराग्राह्यत्वहे-
तुत्वं तत्किमुभयव्याप्तेः शिवरात्रित्वप्रयो-
जकतया, शिवरात्रिगतप्राशस्त्यप्रयोजक-
तया, कर्मकालव्याप्त्याधिक्यप्रयोजकतया
वा । नाद्यः, उभयव्याप्तेरेव शिवरात्रिता-
प्रयोजकत्वे दिनद्वयेऽप्युभयव्याप्त्यभावे पू-
र्वदिने च निशीथव्याप्तौ बहुलग्रन्थकारसं-
मतशिवरात्रित्वविलयापत्तेः । न द्वितीयः,
रविवासरयोगादीनामिवोभयव्याप्तेः शि-
वरात्रिगतप्राशस्त्यबोधकवचनस्यैकस्याप्य-
नुपलब्धेः । नापि तृतीयः, उक्तानेकव-
चनैर्महानिशाया एव कर्म्मकालत्वावग-
त्या तद्व्याप्त्याधिक्यस्योभयव्याप्तिप्रयोज्य-
त्वासम्भवात् । प्रदोषव्याप्तेः शिवरात्रि-

त्वप्रयोजकताबोधकानि वाक्यानि तु सामान्यमासान्तरशिवरात्रिविषयाणि, न तु योगरूढ्या शिवरात्रिशब्दबोध्यविषयाणीति ग्रन्थकारान्तरेण स्पष्टीकृतमिति तद्विवरणावसर एव स्फुटीभविष्यति । अस्तु वा निर्णयामृताद्यभिहितं प्रकृतशिवरात्रित्वप्रयोजकत्वमपि प्रदोषव्याप्तेस्तद्बोधकेभ्यो वचनेभ्यः, अथापि न प्रदोषव्याप्तेर्निशीथव्याप्तिसहकृताया न वा निशीथव्याप्तेः प्रदोषव्याप्तिसहकृतायाः शिवरात्रिताप्रयोजकता कस्याप्यभिप्रेतेति दिगिति ।

मयूखकारोऽपि दिनद्वये चतुर्दश्या निशीथव्याप्तौ परस्या एव ग्राह्यत्वे साधकतया(आदित्यास्तमये काले अस्ति चेद्या चतुर्दशी । तद्रात्रिः शिवरात्रिः स्यात् सा भवेदुत्तमोत्तमा [१] प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी । रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत् [२] दिवारात्रिव्रतं

यच्च एकमेकतिथौ गतम् । तस्यामुभययो-गिन्यामाचरेत्तद्व्रतं व्रती [३] इति वचनानि प्रदोषव्याप्त्याधिक्यं च ) उपन्यास्थत् ।

तत्रेदं वक्तव्यम् । शिवरात्रिविषये महानिशाव्याप्तिकग्राहकाणि, प्रदोषव्याप्तिकग्राहकाणि, रात्रिव्याप्तिकग्राहकाणि, च वचनान्युपलभ्यन्ते, तत्र च रात्रिमात्रव्याप्तिकग्राहकाणि, प्रदोषव्याप्तिकग्राहकाणि, च वाक्यानि सामान्यमासशिवरात्रिविषयाणीति प्रायो निर्णायकग्रन्थेभ्य एव प्रतीयते । महानिशाव्याप्तिकग्राहकताप्रतिपादकानि वाक्यानि तु लिङ्गाविर्भावस्य फाल्गुनकृष्णचतुर्दश्यामेव वचनेषूपलम्भात्, प्रातिस्विकरूपेण तद्धेतुकतयैव महानिशाव्याप्तिकग्राह्यत्वस्य प्रतिपादनाद्, बहुषु वचनेषु माघकृष्णेत्यादिपदोपलम्भाच्च फाल्गुनकृष्णचतुर्दशीविषयाण्येव । एवं च सामान्यमासशिवरात्रिविषयकेण ( आदि-

त्यास्तमय) इत्यादिवाक्येन प्रतिपदोक्तत-द्विषयकवाक्यविषयसङ्कोचो न युक्तः। अन्यथा दिनद्वयेऽपि प्रदोषास्पर्शे महानिशाव्याप्तिकग्राह्यताप्रतिपादकवचनानां चारितार्थ्यात्, सामान्यतस्तद्वाक्यानां प्रदोषव्याप्तिकचतुर्दश्यतिरिक्तविषयकत्वे कल्प्यमाने पूर्वदिने, महानिशामात्रव्याप्तौ, परदिने च प्रदोषमात्रव्याप्तौ, तद्वाक्यानामप्रवृत्तेर्महानुपप्लवोऽग्रिमग्रन्थविरोधश्च। प्रदोषव्याप्त्याधिक्यप्रदर्शनं तु न कथमपि प्रकृत उपयुज्यत इति निरूपितं निर्णयसिन्धुवक्तव्यावसरे। यदा तु फाल्गुनकृष्णचतुर्दश्या दिनद्वयेऽपि न निशीथव्याप्तिस्तदा सामान्यमासशिवरात्रिविषयकवाक्येनैव निर्णय इत्यन्यत्। (दिवारात्रिव्रतम्) इति तु वाक्यपर्यालोचनेनैव सामान्यव्रतविषयकमिति स्पष्टीभवतीति न तद्विशेषव्रतविषयकाणि (रुद्रव्रतेषु सर्वेषु कर्त्तव्या सं-

मुखी तिथिः) इत्यादीनि वाक्यानि बाधितुं प्रभवतीति कृतं पल्लवितेनेति ।

निर्णयामृतकारस्तु (फाल्गुनकृष्णाचतुर्दशी प्रदोषव्यापिन्येव ग्राह्या, निशीथव्याप्तिकग्राह्यताप्रतिपादकवाक्यानि तु प्रदोषव्याप्तेरेव स्तावकानि) इत्यभ्यधात् ।

तत्र यद्वक्तव्यं तन्महानिशाया लिङ्गाविर्भावकालत्वबोधकवचनैः, तान्यादाय प्रवृत्तैर्बहुभिर्निबन्धकारैश्चाभिहितमिति विरस्यते तद्विषये। उक्तं च किञ्चिन्मयूखवक्तव्यावसर इति तत एव सूक्ष्मदृशाऽवधातव्यम् ।

मदनरत्नकारस्तु सामान्यचतुर्दशीनिर्णयप्रकरणे ( चतुर्दश्या च पूर्णिमा ) इति सामान्यचतुर्दशीविषयकवाक्यानि ( शुक्ला चतुर्दशी ग्राह्या परविद्धा सदा व्रते ) इत्यादिव्यासादिवाक्यैः शुक्लचतुर्दशीविषयाणि, अत एव ( कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे

चतुर्दशी । पूर्वविद्धा तु कर्त्तव्या परविद्धा न कस्य चित् ) इत्याद्यापस्तम्बादिवाक्यान्यप्युपपद्यन्ते, ( अष्टम्येकादशी षष्ठी कृष्णपक्षे चतुर्दशी । अमावास्या तृतीया च कर्त्तव्या परसंयुता ) इत्यादिनारदीयादिवाक्यानि तु ( एकादश्यष्टमी षष्ठी उभे पक्षे चतुर्दशी । अमावास्या तृतीया च ता उपोष्याः परान्विताः ) इत्यादिवृद्धवशिष्ठादिवाक्यस्योपोष्या इति पदस्वारस्यादुपवासविषयकाणि, न तु तदतिरिक्तव्रतविषयकाणि, ( कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी । पूर्वविद्धा तु कर्त्तव्या परविद्धा न कस्य चित् । उपवासादिकार्येषु ह्येष धर्मः सनातनः ) इत्यादिवाक्यानि तु ( रुद्रव्रतेषु सर्वेषु कर्त्तव्या संमुखी तिथिः ) इतिवचनबलात्, ( चतुर्दशी तु कर्त्तव्या त्रयोदश्या युता विभो । मम भक्तैर्महाबाहो भवेद्या चापराह्णिकी । दर्श-

विद्धा न कर्त्तव्या राकाविद्धा कदा चन ) इत्यादिस्कान्दादिवाक्यघटकममभक्तैरितिपदस्वारस्याद्दुद्धसम्बन्ध्युपवासविषयाणि) इति निर्णीय, फाल्गुनचतुर्दशीप्रकरणे (यदा तु दिनद्वयेऽपि निशीथव्यापिनी चतुर्दशी तदा निशीथयोगस्य समानत्वेऽपि पूर्वा ग्राह्या, बहुभिर्वाक्यैर्जयायुक्ताया विधानात्, ( महतामपि पापाना हृष्टा वै निष्कृतिः पुरा। न हृष्टा कुर्वतां तुसां कुहूयुक्तां तिथिं त्विमाम् ) इति शिवरात्रिप्रकरणपठितस्कन्दपुराणवचनेनाऽमावास्यायुक्ताया निषेधाच्च, ( भवेद्यत्र त्रयोदश्यां भूतव्याप्ता महानिशा। शिवरात्रिव्रतं तत्र कुर्याज्जागरणं तथा )इतिवचनाच्च)इत्याचचक्षे।

धर्मसिन्धुकारस्तु ( दिनद्वये कात्स्न्येनैकदेशेन वार्द्धरात्रव्याप्तौ पूर्वेति हेमाद्र्याशयानुसारी कौस्तुभः, परैवेति माधवनिर्णयसिन्धुपुरुषार्थचिन्तामणिकृदादयो बहवः)

इति सूचयामास ।

तिथिनिर्णयसारकारस्तु कृष्णाचतुर्दशीनिर्णयप्रकरणे (शिवरात्रिचतुर्दश्यां तु विशेषः) इत्युपक्रम्य, निर्णयामृतप्रदर्शितदिशा प्रदोषव्याप्तिकतयैव निर्णयमकरोत् ।

परं तु तत्र ग्रन्थे फाल्गुनकृष्णचतुर्दशीनिर्णायकत्वं न स्पष्टमायाति, तद्विषयाणां विशेषवचनानामनुपन्यासात्, एवं तु सोऽपि ग्रन्थः सामान्यमासशिवरात्रिपरतया चेन्नापयितुं शक्यते, तर्हि न निर्णयामृतवद्दूष्य इति ध्येयम् ।

निर्णयभास्करकारस्तु मयूखोक्तमेवानुववाद ।

अत्र यद्वक्तव्यं तन्मयूखवक्तव्यावसर एवोक्तम् ।

तिथिनिर्णयकारोऽपि प्रदोषव्याप्त्यैव शिवरात्रिनिर्णयमकरोत् ।

तत्र यद्वक्तव्यं तन्निर्णयामृतवक्तव्यासर

एवोक्तम् ।

कालनिर्णयसिद्धान्तकारस्तु प्रदोषनिशीथोभयव्याप्तेश्शिवरात्रिगतोत्तमत्वप्रयोजकत्वमाह ।

तत्र यद्वक्तव्यं तन्निर्णयसिन्धुवक्तव्यावसरेऽभिहितम् ।

भट्टोजिदीक्षितकृततिथिनिर्णयेऽपि मयूखोक्तमेवानूदितम् ।

तत्र यद्वक्तव्यं तन् मयूखवक्तव्यावसर एवोक्तम् ।

नागेशकृततिथिनिर्णये तु ( दिनद्वये मध्यरात्रव्याप्तौ परेति माधवः । पूर्वैवेति हेमाद्रिः ) इत्येवोक्तम् ।

तस्य ग्रन्थानां देशकालाधिकारिभेदेन प्रामाण्यस्य व्यवस्थितत्वमिति तात्पर्यम् ।

तिथ्यर्ककारस्तु प्रथमं माधवोक्तमेव संक्षेपतोऽनूद्य, ( हेमाद्रिमदनौ तु अर्द्धरात्रादित्यस्मादेव वचनाद्दिनद्वये निशीथव्या-

प्तौ पूर्वैत्याहतुः ) इत्येवोक्तवान् ।

तस्यायमाशयः ( माघफाल्गुनयोर्मध्य ) इत्यादिचतुर्द्दशीविशेषविषयाणां वाक्यानां (निशाद्वये चतुर्दश्याम्) इति सामान्यचतुर्दशीविषयकेण वाक्येन बाधो नोचित इति प्रकृतविषये माधवस्य प्रौढ़िवादोक्तिरेवैषेति ।

शिवार्कोदयकारिकाकारस्तु ( ग्राह्या तदा स्यात्तु निशीथगैव व्याप्तौ तदंशेन महत्त्वतः स्यात् । व्याप्तिः समांशेन तदा प्रदोषव्याप्तान्यथा केवलतद्युतैव ) इत्युक्तवान् ।

तस्य च निर्णयसिन्धूक्तानुवाद एव तात्पर्यमिति तत्रत्यवक्तव्यावसर एवात्रत्यवक्तव्यमप्यभिहितम् ।

माधवीयकारिकायां ( प्रदोषे वा निशीथे वा द्वयोर्वा यास्ति सा भवेत् । शिवरात्रिव्रते तत्र द्वयोः सत्ता प्रशस्यते । तदभा-

वे निशीथैकव्याप्तापि परिगृह्यताम् । तस्याश्चासंभवे ग्राह्या प्रदोषव्यापिनी तिथिः ) इत्याह ।

तस्योभयव्याप्तेः शिवरात्रिगतप्राशस्त्यप्रयोजकत्वमित्याशयः, तत्र च यद्वक्तव्यं तन्निर्णयसिन्धुवक्तव्यावसरे निरूपितम् ।

संग्रहकारोऽपि मयूखोक्तमेव संक्षिप्यानूदितवान् ।

अत्रत्यवक्तव्यं मयूखवक्तव्यावसरे द्रष्टव्यम् ।

व्रतरत्नाकरकारस्तु ( दिनद्वये निशीथव्याप्तौ परेति सर्वसंमतम् ) इत्याह ।

तत्रेदं वक्तव्यम्, एतादृशसुप्रसिद्धविप्रतिपत्तिविषयस्यार्थस्य सर्वसंमतत्वकथनं प्रकारद्वयेन संभवति ग्रन्थानालोचनेन, साहसेन वेति ।

लघुव्रतार्ककारस्तु प्रायो निर्णयसिन्धूक्तान्यक्षराण्येवोद्धृत्य स्वग्रन्थे स्थापित-

वान् ।

अत्रत्यवक्तव्यं निर्णयसिन्धुवक्तव्याव-सर एव द्रष्टव्यम् ।

देवदासप्रकाशकारस्तु प्रदोषव्याप्त्यैव निर्णयामृतोक्तदिशा निर्णयमकरोत् ।

तत्र यद्वक्तव्यं तन्निर्णयामृतवक्तव्या-वसर एवोक्तम् ।

अनूपविलासकारस्तु निर्णयसिन्धुका-रोक्तानेव वर्णान् साकल्येन स्वग्रन्थे नि-हितवान् ।

तत्र यद्वक्तव्यं तन्निर्णयसिन्धुवक्तव्या-वसर एवोक्तम् ।

नागोजिभट्टास्तु (या तु दिनद्वये तादृशी सा परेति माधवः, पूर्वैवेत्यन्ये ) इत्याहुः ।

तेषां माधव इत्येकवचनेन अन्ये इति वहुवचनेन चोत्तरत्रैव पक्षे बहूनां ग्रन्थ-काराणां युक्तीनां च पक्षपात इत्याशयः ।

लघुतिथिनिर्णयकारस्तु ( शुक्ला परा पू-

र्युता तु कृष्णा चतुर्दशी वासरमध्यगा या। साऽनन्तपूजार्थमथार्द्धरात्रादूर्द्ध्वं जया चेदितरेशरात्रिः ) इत्याह।

तस्यायं भावः। अर्धरात्रात् परत्र जयया युक्ता पराऽन्यथा तु सर्वथापि पूर्वैवेति।

तिथिनिर्णयोद्धारकारस्तु (उभयदिने निशीथव्याप्तौ पूर्वेति हेमाद्रिः, परेति माधवनिर्णयामृतौ, कमलाकरोप्येवम् ) इत्याह।

तत्रेदं वक्तव्यम्। इदानीन्तनोपलभ्यमाननिर्णयामृतपुस्तकेषु तु प्रदोषव्याप्त्यैव निर्णय उपलभ्यते, निर्णयसिन्धुकारादिभिरप्येवमेवोक्तमिति निरुक्तग्रन्थकारोक्तिर्निर्णयामृतानवलोकनमूलिका तत्समाननामकग्रन्थान्तराऽभिप्रायिका वेति।

धर्मप्रवृत्तिकारस्तु ( दिनद्वयेऽप्यर्द्धरात्रे वर्त्तमाना चतुर्दशी। तदा पूर्वा परित्याज्या कर्त्तव्या सा नरैः परा ) इतिवचनमात्रं शिवरात्रिनिर्णयप्रकरणेऽवोचत्, न किमपि व्य-

वातिष्ठिपत् ।

तत्रेदं वक्तव्यम् । प्रागुक्तं वचनं यदि प्रामाणिकं तदापि सामान्यविषयकमिति न माघादिनामोत्कीर्त्तनपुरस्सरपूर्वविद्धाविधायकबाधनायालमिति दिगिति ।

व्रतकौमुदीकारस्तु ( निशीथव्यापिनी ग्राह्या ) इत्येवोक्तवान् ।

कृत्यमञ्जरीकारोऽपि ( सति सम्भवे प्रदोषनिशीथोभयव्यापिनी ग्राह्या, असम्भवे निशीथव्यापिनी ) इति वदन्नर्थत उभयव्याप्तेः प्राशस्त्यप्रयोजकत्वमेवाभिप्रैति ।

तत्र यद्वक्तव्यं तन्निर्णयसिन्धुवक्तव्यावसर एवोक्तम् ।

कृत्यसारसंग्रहकारोऽपि कृत्यमञ्जरीकारोक्तमेवानुववाद ।

अत्रत्यवक्तव्यमपि निर्णयसिन्धुवक्तव्यावसर एव द्रष्टव्यम् ।

निर्णयबिन्दुकारस्तु ( चैत्रश्रावणव्यति-

रिक्ता शुक्ला चतुर्दशी परा, कृष्णा पूर्वा)इत्येतावदेवाह।

ॐ हत्याकामधेनौ तु (दिनद्वये निशीथव्याप्तौ परेति माधवः, पूर्वैवेति हेमाद्रिः) इत्येवोक्तम्।

तस्य परेतीत्यत्रैवशब्दानुपादानात् पूर्वैवेतीत्यत्र तदुपादानात्, पूर्वं माधवमतमुपन्यस्यान्ते हेमाद्रिमतोपन्यासाच्च हेमाद्रिमतमेव युक्तमिति भावः।

व्रतराजकारोऽपि मयूखोक्तमेवान्ववदत्। तत्रत्यवक्तव्यं मयूखवक्तव्यावसरे द्रष्टव्यम्।

कृत्यसारसमुच्चयकारस्तु प्रदोषनिशीथोभयव्याप्तेः शिवरात्रित्वप्रयोजकत्वमाह।

तत्रत्यवक्तव्यं निर्णयसिन्धुवक्तव्यावसरेऽभिहितम्।

स्मृतिकौस्तुभकारस्तु माघासित इति वाक्यस्य जयाप्रयुक्तामित्यत्र प्रशब्दोपा-

दानादन्यत्र तदनुपादानाच्च कृत्यरत्नाकरयु-
क्तदिशा दिनद्वये निशीथयोगाभाव एव
प्रवृत्तिरित्यभिधाय, प्रोवाच ( यद्यपि प्र-
दोषव्याप्त्याधिक्यादिहेतुभ्य उभयदिने नि-
शीथव्याप्तौ परैव ग्राह्येति प्राप्नोति स्वीकृ-
तं च तथा माधवेन, तथापि नैतत्साध्विति
हेमाद्रिमदनरत्नादयः, तेषामयमाशयः। इह
हि पूर्वविद्धा विधायकानि बहूनि वचनानि
दृश्यन्ते, कृष्णाष्टमी स्कन्दषष्ठी [१] जन्मा-
ष्टमी रोहिणी च [२] पूर्वविद्धा तु कर्त्त-
व्या [३] माघफाल्गुनयोर्मध्ये इत्यादीनि।
तथाऽमायुक्ताया निषेधोऽपि महतामपि
पापानामित्यादिः। यथा च नैतेषां परत्रैव
निशीथव्याप्तिरितिपक्षे प्रवृत्तिर्नियमविधि-
त्वे सम्भवत्यपूर्वविधित्वस्यान्याय्यत्वात्,
तथा पूर्वत्रैव निशीथव्याप्तिरिति पक्षेऽपि
न प्रवृत्तिर्विधित्वे सम्भवति शास्त्रान्तरा-
नुवादत्वेन वैयर्थ्यस्यान्याय्यत्वात्, दिनद्वये

निशीथव्याप्तौ हि यथा प्रदोषव्याप्त्याधिक्येन दिवारात्रिव्रतं यच्च इतिवचस्सहकृतेन संकल्पकालव्याप्तिसहकृतेन च परा प्राप्यते, तथा उपोषणं चतुर्दश्याम् इत्यादिसार्थवादकाम्यगुणविधिना कृष्णपक्षेऽष्टमी चैव रुद्रव्रतेषु सर्वेषु इत्यादिवचःसहकृतेन पूर्वा प्राप्यत इत्यनियमे प्राप्ते पूर्वविद्धाविधीनां परविद्धानिषेधस्य च नियमविधित्वं लभ्यत इति।

अत्र सर्वेषां वचनानां यथा व्यवस्था कृता तथा माधवेन पराग्राह्यताप्रतिपादकतयोपन्यस्तस्य निशाद्वये चतुर्दश्यामितिवचनस्य कापि व्यवस्था न कृतेति न्यूनतेति केचित्।

अन्ये तु प्रकृतविषये दिवारात्रिव्रतम् इतिवाक्यतो निशाद्वये चतुर्दश्याम् इतिवाक्यस्येषदपि न्यूनातिरिक्तार्थाबोधकतया तयोस्तुल्ययोगक्षेमकतया तद्व्यवस्थयैव

तद्व्यवस्थापि दर्शितप्रायैवेत्याहुः ।

युक्तं चैतत् । दिवारात्रिव्रतं यच्च. इत्यस्यैव निशाद्वये चतुर्दश्याम्. इत्यस्यापि चतुर्दशीसामान्यविषयत्वेन तयोर्वैषम्यस्य दुरुपपादत्वात् । माघातिरिक्तचतुर्दशीविषयतया तच्चारितार्थ्ये संभवति चतुर्दशीसामान्यविषयकत्वव्रतसामान्यविषयकत्व - रूपवैलक्षण्यस्य सतोऽपि प्रकृतेऽकिञ्चित्करत्वाच्चेति ।

द्वैतनिर्णयकारस्तु प्रोवाच, ( शिवरात्रिव्रते हेमाद्रिमाधवयोर्विप्रतिपत्तिः । तत्र हेमाद्रिः । तत्र यदा चतुर्दशी पूर्वदिने निशीथमात्रव्यापिनी उत्तरदिने तु प्रदोषमात्रव्यापिनी निशीथव्यापिनी वा तदाऽर्द्धरात्रात् पुरस्ताच्चेत्. इतिवचनात् पूर्वा, उत प्रदोषव्यापिनी ग्राह्या. इतिवचनादुत्तरेति सन्दिह्याह । उच्यते । यद्यप्यर्द्धरात्रात्. इति वाक्यं द्वितीयदिने प्रदोष-

व्याप्त्यभावेऽपि सावकाशम्, प्रदोषव्यापिनी इति वाक्यं चार्द्धरात्रादुपरि जयायोगेऽपि सावकाशम्, तथाप्येवंविषये द्वितीयचतुर्दशीग्रहणे प्रागुदाहृतपूर्वविद्धशिवरात्रिप्रतिपादकबहुवाक्यसंकोचः प्रसज्ज्येत, पूर्वशिवरात्रिग्रहणे तु तदभाव इति सैव ग्राह्या । किं च पूर्वा बहुकर्मकालव्यापिनी, उत्तरा तु न तथेति सैव ग्राह्येति । तदिदमयुक्तम् । तत्र य आद्यो दोष उक्तस्तत्र विद्धपदं सर्वतिथिसाधारणत्रिमुहूर्त्तवेधाभिप्रायमुत योगमात्रपरमुत रात्रिवेधपरमथ निशीथवेधपरम् । नाद्यः । उत्तरदिन एव या प्रदोषव्यापिनी पूर्वदिने तस्य त्रिमुहूर्त्तवेधाभावेन पूर्वविद्धशिवरात्रिविधायकवाक्यानामप्रवृत्तत्वात् । न द्वितीयः । तानि हि वाक्यानि कानि चिद्योगं वदन्ति कानि चिद्वेधम्, तत्रोपसंहारन्यायेन योगसामान्यं वदतामपि वेधाख्य-

विशेषपरतैव युक्ता न तु विपरीतम्, ततश्च प्रागुदाहृतेत्याद्यदोषोक्त्यर्थे हेमाद्रिग्रन्थे विद्धपदं योगमात्रपरमिति द्वितीयपक्षोऽनुपपन्नः । अन्त्यौ तु पक्षौ हेमाद्रिणा शिवरात्रिप्रकरणे जन्माष्टम्येकादश्योरिव वेधान्तरानिरूपणादेवापास्तौ । एवं किं चेत्यादिद्वितीयदोषे बहुकर्मकालेत्यत्र कर्मशब्देन जागरणमुच्यत उतोपवासः । नाद्यः । जागरणोपवासयोरन्योन्यं कालविरोधे स्वयमेव पूर्वमुपवासकालबलीयस्त्वस्योक्तत्वात् । न द्वितीयः । अपि चोपवासस्याहोरात्रव्यापकस्येति ग्रन्थेन दिनरात्रियुक्ताया उपवासकर्मकालत्वस्योक्तत्वादुत्तरस्या एव बहुकर्मकालव्यापित्वात् । एवं च हेमाद्र्युक्तदोषद्वयोद्धारे सति प्रदोषव्यापिनी इतिवाक्येनोत्तराग्रहणमेव युक्तम् । अर्द्धरात्रात् पुरस्तात् इति तु द्वितीयदिनेऽपि प्रदोषव्याप्त्यभावे ज्ञेयम् । न च प्रदोषव्याप्ति-

वाक्यमेवार्द्धरात्रात् परतो जयायोगे प्रवर्त्ततामिति वाच्यम्। सामान्यविशेषभावसावकाशनिरवकाशन्यायादसभावेऽप्याकाङ्क्षिताऽनाकाङ्क्षितयोराकाङ्क्षितविधानं ज्याय इतिन्यायस्य विनिगमकत्वात्। यदा ह्युत्तरदिने प्रदोषव्यापित्वं तदा तेनैव निर्णयः। तस्मादुपेक्ष्योऽत्र हेमाद्रिकृतो निर्णयः। माधवकृतो निर्णयस्तु न चतुराननेनाप्यन्यथयितुं शक्यते इत्यलम्) इत्यादि।

यद्यप्यस्य ग्रन्थस्य साधुत्वमसाधुत्वं वा न सम्यगुद्भावयितुं शक्यते, यतो मूलभूतस्यापि हेमाद्रिग्रन्थस्यैवातिप्रयत्नेनापि न सम्पादितं दुर्दैवेन मयावलोकनमपि, तथापि यान्यक्षराणि हेमाद्रिनाम्नोल्लिखितानि तान्येवालोक्य किञ्चिदुच्यते। तथाहि। सर्वेष्वेव वचनेषु वेधो नाम योगः, सोऽपि न प्रकृते समानकालवृत्तित्वलक्षणः, कस्यापि तिथिद्वयस्यैकक्षणवृत्तित्वरूपवेधस्यासम्भ-

वात्, महाकालमादाय तदुपपादने तु सर्वस्यैव विद्धत्वमेव न शुद्धत्वमित्यव्यावर्त्तकं तत् स्यात्। तस्मात् स्वसमाप्तिक्षणप्रवर्त्तमानत्वं पूर्वतिथेरुत्तरतिथौ, स्वप्रवृत्तिक्षणसमाप्तिकत्वं चोत्तरतिथेः पूर्वतिथौ वेधशब्देनाभिधीयते। अरुणोदयवेध इत्यादौ च क्व चिदरुणोदयाधिकरणक्षणोत्तरकालिकी या दशम्याः समाप्तिस्तदधिकरणक्षणप्रवर्त्तमानत्वमित्यर्थः। अर्द्धरात्रवेध इत्यस्य च अर्द्धरात्रत्वेन निर्दिष्टो यः कालस्तद्घटको यः क्षणस्तद्वृत्तिर्या समाप्तिस्तत्समानाधिकरणप्रवर्त्तमानत्वमित्यर्थः। तत्र कस्यां तिथौ कीदृशो वेधो विहितो निषिद्धो वेति तु तत्तद्विशेषवचनैरेवावगन्तव्यम्। त्रिभिर्मुहूर्त्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृत, इत्यस्य तु यत्र तिथौ पूर्वतिथिपरतिथिवेधौ विहितौ निषिद्धौ वा वेधकालस्तु वचनेषु नोपलभ्यते तत्र पूर्व-

तिथेरुत्तरत्र वेधस्सूर्योदयावधिकमुहूर्त्तत्रयो-
त्तरकालिकः, परतिथेश्च पूर्वत्र सूर्यास्तमयका-
लावधिकमुहूर्त्तत्रयपूर्वकालिकश्च विवक्षित
इत्येव तात्पर्यन्न तु सूर्योदयोत्तरादित्रिमुहू-
र्त्तघटकक्षणवेध एव ग्राह्य इत्यत्रापि, चतु-
र्थ्यादिमुहूर्त्तघटकक्षणाधिकरणकवेधस्य सा-
मान्यवेधत्वेनासंग्राह्यतापत्तेः। तत्तत्तिथि-
गतं शुद्धत्वं तु यस्यां तिथौ यादृशो वेधो
निषिद्धस्तद्राहित्यमेव। अत एवैकस्यामेवै-
कादश्यामरुणोदयोत्तरं सूर्योदयाच्च प्राक्
प्रवर्त्तमानायां केषां चिच्छुद्धात्वं केषां
चिच्च विद्धात्वं सामञ्जस्येन निर्वहति।
यत्तु क्व चिद्ग्रन्थकारैस्सूर्योदयद्वयव्याप-
कत्वं विद्धत्वव्यधिकरणं शुद्धत्वमुक्तम्।
तस्यायमाशयः। यत्र वेधविशेषकालो न
निर्दिष्टस्तत्र पूर्वोक्तेन त्रिभिर्मुहूर्त्तैरितिसा-
मान्यवाक्येन बोधितो वेध एव वेधपदव्य-
वहार्यतामर्हति, स चायं वेधः सूर्योदयद्वय-

व्यापके तिथौ न सम्भवतीति तत्र विद्धत्वव्यधिकरणमेव शुद्धत्वमिति, न तु सर्वत्र सूर्योदयद्वयाव्यापकतिथिवृत्तिवेध एव वेधशब्दार्थ इत्यपि, अरुणोदयोत्तरं सूर्योदयाच्च प्राग् या प्रवर्त्तते सूर्योदयद्वयव्यापिन्येकादशी तत्रापि दशमीविद्धात्वव्यवहारस्येष्टत्वात्। ननु प्रागुक्तदिशा सर्वस्यामेव तिथौ पूर्वविद्धत्वमुत्तरविद्धत्वं च प्रसज्ज्यत इति चेत्, का क्षतिः, न हि शुद्धत्वव्यधिकरणं विद्धत्वमित्यभिहितमेवेति न कोऽप्यापत्तिलेशः सम्भविष्यति। पूर्वविद्धा ग्राह्येत्यादेस्तु यत्सूर्योदयादिषष्टिदण्डात्मककालघटकक्षणस्य पूर्वतिथिवेधाधिकरणत्वं तत्सूर्योदयादिः षष्टिदण्डात्मक एव कालो व्रतादौ ग्राह्य इत्यादिरीत्याऽर्थः। ततस्तु न पूर्वदिने पूर्वविद्धाया एव तिथेरुत्तरदिनेऽनुवर्त्तमानत्वेऽपि पूर्वविद्धा ग्राह्येत्युक्तावपि व्रतादेरुत्तरदिने

प्रसक्तिः। एवं स्थिते हेमाद्रिप्रोक्तप्रथमदूषणबोधकवाक्ये वेधपदार्थं चतुर्द्धा विकल्प्य नाद्य इत्यादिना यदुक्तं तन्नैव सम्भवति। यतो योत्तरदिन एव प्रदोषव्यापिनी सा पूर्वदिनेऽवश्यं सूर्योदयोत्तरमुहूर्त्तत्रयोत्तरमेव प्रवर्त्तिष्यते इति कथं न सा तिथिसामान्यवेधप्रतिपादकप्रागुक्तवचनविषयो, येन सम्भवेत् पूर्वविद्धशिवरात्रिग्राह्यताप्रतिपादकवचनानामप्रवृत्तिः। एवं न द्वितीय इत्यादि यदुक्तं तदपि न सम्भवति, वेधयोगशब्दयोः पर्यायतयोपसंहारादिन्यायस्याप्रसरात्। यद्यपि (त्रयोदश्यस्तगे सूर्ये चतसृष्वेव नाड़िषु। भूतविद्धा तु या तत्र) इतिवाक्योक्तवेधविशेषपरत्वं सम्भवत्युपसंहारन्यायेन पूर्वविद्धाग्राह्यत्वप्रतिपादकवाक्यघटकवेधपदस्य, तथापि न तद्भवद्भिरप्येष्टव्यम्। माधवोक्तिविलयापत्तेः। माधवेन हि यदा पूर्वदिने निशीथमात्रव्यापि-

नी परदिने च प्रदोषमात्रव्यापिनी तत्र पूर्वस्या एव ग्राह्यत्वे व्यवस्थापकतया पूर्वविद्धाग्राह्यत्वप्रतिपादकानि वचनान्युपन्यस्तानि, तद्वाक्यघटकवेधपदस्य प्रदोषवेधपरत्वे तु तदुक्तिर्व्याहन्येतैव । तस्माद्भवत्साध्यमाधवचतुराननाधिकबुद्धिमत्तापरिरक्षणायैव प्रकृते उपसंहारन्यायो न प्रसारणीयः । वस्तुतस्तु भूतविद्धाप्रतिपादकवाक्यानां नोपसंहारन्यायेन चतुर्नाडीवेधपरत्वम् । तथा सति पूर्वदिने लिङ्गाविर्भावकालव्याप्तिकतयैव पूर्वाग्रहणस्य सिद्धतया तत्प्रतिपादकविशेषवचनानां वैयर्थ्यादिति कालतत्त्वविवेचनकारैरेवाभिहितमिति पुरस्तदनुवादेनैव स्फुटीभविष्यति । किं चोपसंहारन्यायेन प्रदोषवेध एव विकल्पनीये योगसामान्यविकल्पो नैव सम्भवति । किं च प्रदोषवेधबोधकवाक्यानालोचनेऽपि तिथिसामान्यविषयकवाक्यप्रवृ-

त्तेरप्रतिहततया सूर्योदयोत्तरमुहूर्त्तत्रयोत्त-
रकालिकवेध एव विकल्पनीय इत्ययं वि-
कल्पोऽसम्भाव्य एव। एवमन्त्यौ त्वित्या-
दिना यौ विकल्पौ खण्डितौ तावप्यसम्भ-
वदुक्तिकावेवेति तदुद्दङ्कनं तत्खण्डनं चाति-
फल्गुतरमेवेति तद्विषये न किमप्यभिधीय-
ते। एवं किं चेत्यादिहेमाद्रिप्रोक्तद्वितीयदो-
षबोधकवाक्यघटककर्मपदार्थं द्विधा विक-
ल्प्य नाद्य इत्यादिना यदुक्तं तदपि न
साधु। यतो यत्रोपवासजागरणयोर्मध्ये
कस्यापि वैशिष्ट्यं न विशेषवचनेन बो-
धितं तत्राहोरात्रसाध्यतयोपवासस्यैव ब-
लीयस्त्वमिति पूर्वहेमाद्रिग्रन्थस्याशयः।
अत्र तु निशि भ्रमन्ति भूतानि इतिपरश्श-
तवचनबोधितरात्रिसाध्यानां जागरणादी-
नामेव प्राबल्यमिति को वा परस्परविरोध
उद्भाव्यते। किं च कर्मपदेन जागरणस्यैव
विवक्षायामपि दिनद्वये निशीथव्याप्तावपि

साम्येन रात्रिद्वयव्याप्तौ परदिनेऽधिकरात्रिव्याप्तौ वा हेमाद्रयुक्तं पूर्वस्या बहुकर्मकालव्यापित्वमसंभव्येवेत्येव किं न दूष्यते, किमिति पूर्वापरग्रन्थविरोधाय बकबन्धनायेव प्रयस्यते । तस्मादत्रत्यकिंचेत्यादिना हेमाद्रयुक्तो दोषो न दिनद्वये निशीथव्याप्तौ परागृहणे, अपि तु परदिने प्रदोषमात्रव्याप्तौ परागृहणे दोषद्वयम्, उभयदिने निशीथव्याप्तौ च परागृहणे बहुवाक्यसङ्कोचात्मक एक एव दोष इत्येव हेमाद्रेराशयोऽन्यथोभयदिने निशीथव्याप्तौ कदा चित्परस्या अधिकरात्रिव्याप्तेस्समरात्रिव्याप्तेरधिकाहोरात्रव्याप्तेश्च बालैरपि सुज्ञेयतया कथंकारं शून्यहृदय इव हेमाद्रिरित्थं ब्रूयादित्यलं मार्त्तण्डप्रच्छादनफलकेन हस्तोत्क्षेपणव्यापारगौरवेण । अत एव न द्वितीय इत्यादिना यदुक्तं तदप्याकाशप्रपतनभीरुशयालुटिट्टिभपादोत्क्षेपसमकक्षमेव,

यत उभयदिने निशीथव्याप्तावुपवासाधिकरणाहोरात्राधिकव्याप्तिः परदिन एव न कथमपि पूर्वदिने सम्भवतीत्ययमर्थ आपामरप्रसिद्धस्तदपलापाय बद्धपरिकरो हेमाद्रिरित्यसम्भवदुक्तिकमेव वचः । पूर्वदिने निशीथमात्रव्याप्तौ परदिने प्रदोषमात्रव्याप्तौ पूर्वस्या बहुकर्मकालव्याप्त्युक्तिस्तु हेमाद्रेः (निशि भ्रमन्ति भूतानि) इतिवाक्यैर्निशाया एव प्रकृतव्रते प्रधानकालत्वावगतेर्भवन्महामान्यमाधवेनापि तथैवोपपादनाच्च तदपेक्षयैवेति न दोषलेशः । किंच (अर्द्धरात्रात्पुरस्ताच्चेत्) इतिवचनं परदिने प्रदोषव्याप्त्यभावे ज्ञेयमित्युक्तिर्महच्चित्रमावहति । यतः पूर्वदिने निशीथमात्रव्याप्तौ परदिने प्रदोषमात्रव्याप्तौ भवद्रीत्या पूर्वविद्धाग्राह्यत्वप्रतिपादकवचनानामप्रवृत्तौ परैव ग्राह्या स्यात् । ततस्तु महानुपपन्नो भवच्चतुराननाधिकमाधवोक्तिव्या-

घातश्च। तेन हि (अर्द्धरात्रात् पुरस्तात्) इत्यादिपूर्वविद्धाग्राह्यताप्रतिपादकानि वचनानि प्रातिस्विकरूपेण पूर्वदिने निशीथमात्रव्यापिनी परदिने प्रदोषमात्रव्यापिनी या तद्विषयत्वेनैव लापितानीत्ययं लेखः सर्वथा माधवग्रन्थमनालोक्यैव तच्चतुराननाधिक्यसाधनाय प्रवृत्तः। यदि तु पूर्वदिने निशीथमात्रव्याप्तौ परदिने प्रदोषमात्रव्याप्तौ पूर्वविद्धाग्राह्यत्वबोधकवाक्यानामप्रवृत्तावपि महानिशाया लिङ्गाविर्भावाधिकरणतया वचनेष्वभिधानान्मुख्यकर्मकालव्याप्तिबलादेव पूर्वाग्रहणोपपत्तौ न दोष इत्याशय इत्युच्यते। तावतापि माधवचतुराननाधिक्यं पराहतमेवेति महतीयमुभयतःपाशा रज्जुः। किं चोत्तरदिने प्रदोषव्याप्तावपि चेन्मुख्यकालव्याप्तिबलादेव पूर्वा गृहीता, किमुतोत्तरदिने प्रदोषव्याप्त्यभावे मुख्यकालव्याप्तिः पूर्वाग्रहणं न

प्रयुञ्जीतेति तद्विषयत्वं व्यवस्थापयता (अर्धरात्रात्) इत्यादिवाक्यानां नैरर्थक्यमेव सम्यक् संपादितमित्यादि सुधीभिरेवोह्यमिति नात्र विस्तृतलेखस्य किमपि प्रयोजनं पश्याम इति ।

जयसिंहकल्पद्रुमकारस्तु हेमाद्रिमाधवयोर्मतं सम्यगसंकीर्णमुपपाद्य, प्रदोषनिशीथोभयव्याप्त्युपग्राहकवचनानुपलम्भाज्जयायुक्तसंग्राहकवचनादमायोगनिषेधकवचनाद्ग दिवारात्रिव्रतम्. इत्यस्य व्रतान्तरे चरितार्थत्वात् संकल्पस्याङ्गतया तत्कालव्याप्तेरकिञ्चित्करत्वाच्च, दिनद्वये निशीथव्याप्तौ परैव ग्राह्येति स्वमतमुपन्यस्याग्रेऽभ्यधात्। (वैष्णवानां तु शिवरात्रिव्रते भूतां कामविद्धां विवर्ज्जयेत्. माघासिते भूतदिनं हि राजन्. इति हरिभक्तिविलासस्थवाक्येन त्रयोदशीविद्धा निषिद्धा)इति ।

तस्यायं भावः त्रयोदशीयुक्तनिषेधकं

(माघासित) इतिवाक्यं साम्प्रदायिकवैष्णवविषयमेव, तद्ग्रन्थेष्वेव तेषां प्राधान्येन निरूपणात्, अन्यग्रन्थेष्वपि तेभ्य एव ग्रन्थेभ्य उद्धृत्य तल्लिखितमिति स्मार्त्तैः शैवैर्भागवतैः स्मार्त्तवैष्णवैरन्यैश्च नादर्त्तव्यंतदिति ।

(रामकल्पद्रुमकारस्तु (त्रयोदश्यस्तगे सूर्ये) इत्यादिप्रदोषव्याप्तिबोधकवाक्यानि मासशिवरात्रिपरत्वेन व्यवस्थाप्योभयदिने निशीथव्याप्तावन्येषां मतभेदं प्रदर्श्याह (वस्तुतस्तु अर्द्धरात्रात् पुरस्तादितिवाक्यघटकपूर्वविद्धानिवर्त्तकादेवकाराज्जयायोगप्राशस्त्याच्छिवरात्रिव्रतमित्यस्य व्रतान्तरे चारितार्थ्यात्कुहूयुक्तानिषेधस्यैतादृशे विषये सार्थकत्वाच्च दिनद्वये निशीथव्याप्तौ पूर्वा ग्राह्येति हेमाद्रिमतमेव युक्तमिति वयं प्रतीम) इति ।

तस्यायं भावः । निशाद्वय इति वचन-

मपि विशेषानुपादानात् सामान्यमासशिव-रात्रिविषयमेवेति ।

कालतत्त्वविवेचनकारस्तु प्रोवाच ( दिनद्वये निशीथयोगे परेद्युः, प्रदोषनिशीथोभययोगात् संकल्पकालयोगादहोरात्रोभय-योगाच्च परैवेति माधवस्तिथितत्त्वेऽप्येवम्, तत्रैतावती पूर्वविद्धाग्रहणे उपपत्तिः । अर्द्धरात्रात् इतिवचनमीदृश एव विषये पूर्वविद्धाविधानार्थम् । अन्ततः सर्वाण्यपि महतामपिपापानाम् इत्यादिपूर्वविद्धाविधायकानि कुहूयुक्तानिषेधकानि चैतादृश एव विषये सार्थकानि,पूर्वस्या एव निशीथ-व्याप्तौ तु पूर्वाग्रहणस्य तत्कालव्यापिनी ग्राह्या. अर्द्धरात्रादधश्चोर्द्ध्वम् नार्द्धरात्रादधश्चोर्द्ध्वम्, अर्द्धरात्रयुता यत्र. पूर्वेद्युरपरेद्युर्वा. इत्यादिवचनैरेव सिद्धत्वात् । न च निशीथव्याप्तिवचनैः पूर्वस्या इव प्रदोषव्याप्तिवचनैरुत्तरस्या अपि प्राप्तौ

पूर्वानियमार्थतया तद्विधीनां सार्थक्यमिति वाच्यम्। रात्रौ जागरणं यस्मात्, इतिहेतुनिर्देशेन समस्तरात्रिव्याप्तेर्भूयोरात्रिव्याप्तेर्वा विवक्षयैव प्रदोषव्याप्तेरभिधानात्। निशीथरात्र्योरिव प्रदोषस्य लिङ्गप्रादुर्भावपूजाकालत्वयोरभावात्तत्स्वरूपस्याविवक्षितत्वात्। महानिशाऽपि महानिशा द्वे घटिके रात्रेर्मध्यमयामयोः, इति देवलोक्तेरर्धरात्ररूपैव। किं चार्धरात्रात् पुरस्तात्, इतिवचने पूर्वविद्धैवेत्युत्तरविद्धानिवर्त्तकादेवकारादुत्तरविद्धायाः प्रसक्तिर्गम्यते, सा चोभयत्र निशीथयोग एव सम्भवति, न तु पूर्वत्रैव तस्मिन्। एवं निषेधवशादपि। किं च सर्वत्रापि पूर्वोत्तरविद्धानियमः कालव्याप्तिशास्त्रानिर्णयविषयविषय एवेत्युक्तम्। तेनात्र दिनद्वये निशीथायोगे माघासित, इति वचनेनोत्तरस्या विधानात् परिशेषादुभयदिननिशीथयोगविषयतैव पूर्व-

विद्धानियमविधेर्युक्तेति । यत्तु प्रतिमा-
सकृष्णचतुर्दशीषु आदौ मार्गशिरे मासि
दीपोत्सवदिनेऽपि वा । गृह्णीयान्माघमासे
वा द्वादशैवमुपोषयेत् इत्यादिस्कन्दपुरा-
णादिवचनैः पूजोपवासजागरणात्मकमेव
काम्यं शिवरात्रिव्रतं विहितं तस्यापि प्र-
तियामं पूजाया जागरणस्य च विधाना-
त्सकलरात्रिसाध्यत्वाद्बहुरात्रिव्यापिन्याम-
नुष्ठानमुचितमिति तत्राप्ययमेव निर्णयः प-
र्यवस्यति । रात्रिव्याप्तिसाम्ये तु रुद्रव्रतेषु
सर्वेषु कर्त्तव्या संमुखी तिथिः इतिब्रह्मवैव-
र्त्तवाक्यात् पूर्वस्यामेवानुष्ठानम् । येषां तु
मते प्रदोषव्याप्तिरपि निर्णायिका तेषामु-
त्तरस्यामिति ) इति ।

अयन्तु ग्रन्थकारो निशाद्वये चतुर्दश्या-
म् इति वचनस्य रुद्रव्रतातिरिक्तचतुर्दशी-
विषयकत्वं दिवारात्रिव्रतम् इत्यस्य च
यत्र नियामकविशेषविध्यलाभस्तद्विषयत्वं

चाभिप्रैति । अत्र येषान्तु मतं इत्यन्तिमपङ्क्तौ निर्णायिकेत्यस्य प्रतिमासकृष्णचतुर्दशीनिर्णायिकेत्येवार्थस्तत्प्रकरण एव तस्य पाठात् । तेन न पूर्वापरग्रन्थविरोध इति दिक् ।

भट्टोजिभट्टकृतकालनिर्णये तु ( दिनद्वये तथात्वे तु प्रदोषव्यापिनीसत्त्वात् परैवेति माधवः, पूर्वैवेति हेमाद्रिः ) इत्येवोक्तम् ।

तत्र यद्वक्तव्यं तन्निर्णयसिन्धुवक्तव्यावसरे उक्तम् ।

कालचन्द्रिकाकारस्तु प्रोवाच ( यदा तूभयदिने निशीथव्यापिनी तदा पूर्वैति हेमाद्रिमदनरत्नादयः । माधवस्तूभयव्याप्तिसत्त्वात् परेत्याह, तदेव सम्यक्, उभयव्याप्तिसत्त्वात् । उभयदिने व्याप्त्यभावे तु परेत्याहुः, सकलसंमतं चेदम् । परं तु महतामपि पापानाम् इत्यस्य व्यर्थतापत्तिः । तत्र प्राप्तेरेवाभावात् । तस्मादुभयत्र व्या-

पत्यभावे पूर्वैव युक्तेति मम भाति । त्रयोदशीयोगविधानस्यामायोगनिषेधस्य च परिपालनात् । प्रदोषव्याप्तिस्तु सामान्यशिवरात्र्यामेव । जन्माष्टमीरोहिणीच इति वाक्ये एवकारेण परविद्धाया निषेधाच्च ) इति ।

तस्यायम्भावः । उभयदिने निशीथस्य व्याप्तावव्याप्तौ च परैव चेद्ग्रृह्येत तर्हि पूर्वविद्धाविधायकानाममायुक्तानिषेधकानां च वैयर्थ्यं स्पष्टमेवेति तानि वाक्यानि यथोभयदिने व्याप्तौ नियामकान्येवमुभयदिनेऽव्याप्तावपि कथं न प्रवर्त्तेरन्, प्रदोषव्याप्तिस्तु सामान्यविषया न प्रकृते किमपि वैशिष्ट्यं संपादयितुमीष्ट इति । परन्तु नैतदुक्तम् । यतः सामान्यविषयकवाक्यस्यापि विशेषविषये विशेषविषयकवाक्यानामप्रवृत्तौ कुतो न प्रवृत्तिः । तस्माद्दिनद्वये निशीथाव्याप्तौ परदिने प्रदोषव्याप्ते-

रवश्यंभावाद् विशेषवाक्यानी च दिनद्वये निशीथव्याप्तौ नियामकतया सावकाशत्वात्तैस्सामान्यवाक्यबाधायोगात् परैव ग्राह्येति। यदि कालतत्त्वविवेचनोक्तदिशा सामान्यवाक्यानां रात्रिव्याप्तावेव तात्पर्यमिति दिनद्वये निशीथायोगिन्यपि चेत् पूर्वाऽधिकरात्रियोगिनी तदा परैवेत्याशय इत्युच्यते, तर्हि न तादृशतात्पर्येण तथा लेख उचित इत्येव दूषणमिति दिक्।

कालतत्त्वविवेचनसारसंग्रहकारोऽपि प्रकृतविषये कालतत्त्वविवेचने उक्तानेवार्थान् संगृह्य प्रादर्शयन्न किमपि स्वप्रतिभया व्यलिखदिति कालतत्त्वविवेचनानुवादेनैव तदनुवादोऽपि जातप्राय एवेति नानूद्यते पार्थक्येन स ग्रन्थः।

वाचस्पतिकृतलघुतिथिनिर्णये तु प्रदोषव्यापिन्येवोक्ता।

तत्र यद्वक्तव्यं तन्निर्णयामृतवक्तव्यावस-

रेऽभिहितम् ।

हरिभक्तिविलासकारस्तु (इदं हि शिवरात्रिव्रतं यद्यप्यनावश्यकं वैष्णवानां तथाप्यत्र सदाचाराद्व विलिख्यत, इत्युपक्रम्य, शिवव्रतधरा ये च ये च तान् समनुव्रताः । पाखण्डिनस्ते भवन्तु सच्छास्त्रपरिपन्थिन इति शिवरात्रिव्रतकरणे प्रत्यवायं चाभिधाय, तिथिनिर्णयं प्रदोषव्याप्त्यैव वदन्, वैष्णवानां विद्धानिषिद्धा, इति प्रतिज्ञाय, तत्र साधकं शिवरात्रिव्रते भूताम् . माघासित इति वचनद्वयम्) इत्याक्रुक्षत् ।

तत्र यद्यपि कस्याप्यास्तिकस्य नैव किमप्यस्ति वक्तव्यम् । यतो येन शिवव्रतकर्तॄणां पाखण्डित्वमेव स्थिरीकृतं तं प्रति कः किं वक्तुमीष्टे । परं त्वेतावद्व विचार्यं स्मार्त्तैस्तिथिनिर्णीया, यदिदं माघासित इति शिवरात्रिव्रत इति च वचनं तदपि शि-

वव्रतधरा इतिवचनसमानप्रामाण्यकमुत ततो विलक्षणप्रामाण्यकं तदिति । यतोऽस्मिन् ग्रन्थे तुल्यमेव प्रामाण्यं तेषां स्फुटम् । परमेतच्चित्रम् । यैर्माघासित इत्यादेः प्रामाण्यमङ्गीकृतं निर्णयसिन्धुकारादिभिस्तैरेव शिवरात्रिव्रतस्य नित्यत्वं तदनुष्ठानस्य पुण्यजनकत्वं चाङ्गीकृतमिति ।

ढुण्ढिप्रतापाख्ये कालनिर्णयसंग्रहे तु ( दिनद्वये निशीथव्याप्तौ अर्द्धरात्रादधस्ताच्चेत् इति वचनात् पूर्वेति हेमाद्रिः, प्रदोषनिशीथोभयव्याप्तिसत्त्वात् परेति माधवः ) इत्येवोक्तम् ।

अत्रत्यवक्तव्यं निर्णयसिन्धुवक्तव्यावसरेऽभिहितम् । यद्वा पूर्वकल्पे वचनप्रदर्शनेनोत्तरत्र युक्तिमात्रदर्शनेन युक्तेश्च धर्मविषये वचनाविरुद्धाया एव ग्राह्यत्वमिति पूर्वकल्प एव युक्त इति विवक्षितम्, एवं चापाद्यमाने न्यायानादरादेवमुक्तिः ।

कालसंग्रहकारिकाकारस्तु ( पूर्वेद्युरेव तदुग्रक्ताहर्द्वयेऽपि तथाविधा । भूयोरात्रि-जयायोगलाभात् पूर्वैव संमता । दिनद्वये-ऽप्यर्धरात्रे वर्त्तमाना परा शुभा । प्रदोषे च निशीथे च वृत्तेरिति तु माधवः ) इत्यु-पनिबबन्ध ।

तत्रापि वक्तव्यं निर्णयसिन्धुवक्तव्या-वसर एवाभिहितम् । यद्वा पूर्वैवेत्येवकारे-ण, संमतेत्यत्र कर्तृविशेषानुपादानेन च पूर्वकल्पे बहूनां संमतिः, उत्तरकल्पे तु मा-धव इतयेकवचनेन तस्यैव संमतिरिति वि-वक्षितम् । एवं चापाद्यमाने न्यायानादरा-देवमुक्तिर्न दोषाय ।

निर्णयसारे तु प्रागुक्तानि बहूनि वच-नानि प्रदर्श्य ( यदि त्रयोदश्यामर्धरात्रे चतुर्दशी प्राप्यते तदा त्रयोदशीविद्धा का-र्या, चतुर्दशीमध्ये च पारणं विधेयम् ) इ-त्युक्तम् ।

धर्मतत्त्वे तु (दिनद्वये निशीथव्याप्तौ प्रदोषव्याप्तिर्नियामिका) इति व्यवस्थितम्।

तत्र यद्वक्तव्यं तन्निर्णयसिन्धुवक्तव्याव-सर एवोक्तम् ।

नारायणभट्टेन स्वीयतिथिनिर्णये(यद्यर्ध-रात्रपर्यन्तं भवेच्छिवचतुर्दशी । सूर्योदयं स-मारभ्य सैवोपोष्या सदा बुधैः ) इतिश्लो-कमुपनिबध्नताऽर्थाद्दिनद्वये निशीथव्याप्तौ परैवेति कथितम् ।

परन्त्वेतावदिह जिज्ञासितव्यम्, कुतोऽ-यं निर्णयः समासादित इति ।

तिथिनिर्णयतत्त्वप्रकाशिकाकारस्तु (शि-वरात्रिरिह व्याप्तौ स्यान्निशीथः प्रदोषयुक्। एकैकयोगे तु निशीथ एव तस्याप्यभावे तु भवेत् प्रदोषः) इति वदन्नर्थतो निशीथव्या-प्त्यादेरव्याप्यवृत्तिशिवरात्रित्वप्रयोजकत्व-मभ्युपगच्छति।

तदेतत् कुत इति स एव प्रष्टव्यः ।

शिवरात्रिसरण्यां तु ( पूर्वविद्धा यदि नैव लभ्यते तदैवोत्तरा ग्राह्या ) इति व्यवस्थितम्।

शिवपुराणस्थशिवरात्रिमाहात्म्ये तु (कामवारयुता सा स्यान्न कुहूसंयुतापि च ) इत्येवोक्तम् ।

तस्य चोपक्रमाद्यवलोकनेनोभयदिने निशीथव्याप्तिविषयकत्वं स्पष्टमेव प्रतीयते।

कालनिर्णयविन्दुकारस्तु ( निशीथद्वयव्याप्तौ तूत्तरा ) इत्येतावदाह ।

स च श्रद्धालुभिः कुत एतदिति प्रष्टव्यः।

पुरुषार्थचिन्तामणिकारस्त्वाह । ( यदा दिनद्वयेऽप्यर्द्धरात्रव्यापिनी तदा शिवरात्रिव्रते भूतां कामविद्धां विवर्ज्जयेत्, इति वचनेन, निशाद्वये चतुर्द्दश्याम्, इति वचनेन चोत्तरार्द्धरात्रव्याप्तिकमात्रविषयकेणोत्तरार्द्धरात्रावव्याप्तौ सावकाशानामर्द्धरात्रात्पुरस्ताच्चेत्, इत्यादिवचसां बाधेनोत्तरा-

विधानात्, प्रदोषव्यापिनी. इति दिवारात्रिव्रतं यत्र. इति यो यस्य विहितः काल. इति आदित्यास्तमय. इति पूर्वोदाहृतानेकवचनाच्चोत्तरैव, बहुकर्मकालव्यापिन्येत्र ग्राह्या. इतिवदतो हेमाद्रेः कालादर्शमाधवनिर्णयामृतज्योतिर्निबन्धतिथितत्त्वादिग्रन्थकाराणां संमतत्वाच्च। यत्तु माघासित. इति वचनमर्द्धरात्रादुपरि जयायोगनिषेधकमिति हेमाद्रिणोक्तं तद्द्वितीयदिने प्रदोषव्याप्तिविषयमित्युक्तमेव। अन्यथोपवासपूजाजागरणानि शिवरात्रिशब्दवाच्यानि. इति सिद्धान्तयतो हेमाद्रेर्द्वितीयार्द्धरात्रव्याप्तौ तत्रैवोपवासकालाधिकव्याप्तिसत्त्वेन, किं च पूर्वा बहुकर्मकालव्यापिनी. इति ग्रन्थस्य सर्वथाऽसङ्गत्यापत्तेः। शिवरात्रिव्रते भूताम्. इतिवचोविरोधेन हेमाद्रिग्रन्थस्यैव त्याज्यत्वापत्तेः ) इति।

तत्र यद्वक्तव्यं तत् पूर्वमेवानेकशो नि-

रूपितमथापि किञ्चिदुच्यते । निशाद्वये चतुर्दश्याम्, दिवारात्रिव्रतम्, शिवरात्रिव्रत, इतिवचनत्रयेऽपि माघासित, इत्यादिपदाभावान् माघफाल्गुनयोर्मध्य, इतिमाघकृष्णचतुर्दशीमात्रविषयकानेकप्रतिपदोक्तवचनैरेव तद्वचनत्रयस्य बाधो युक्तो न तु विपरीतं सामान्यवाक्येनैव विशेषबाधः । एतेनोत्तरार्द्धरात्रव्याप्तिमात्रविषयकेणेत्य - पास्तम् । अर्द्धरात्रात् पुरस्तात्, इत्यादिवाक्यानां यथोत्तरार्धरात्राव्याप्तौ न सार्थक्यं तथा कालतत्त्वविवेचनकारादिभिरेव साधूपपादितम् । माघासित, इति वचनं तु दिनद्वये निशीथयोगाभाव एव प्रवर्त्तते, एकत्र प्रशब्दोपादानादन्यत्र तदनुपादानादित्यादि तु स्मृतिकौस्तुभकारादिभिरेव सुष्ठु निरूपितम् । न च दिनद्वये निशीथाव्याप्तावुत्तरदिने प्रदोषव्याप्त्यवश्यंभावेन सामान्यशिवरात्रिविषयकप्रदोषव्याप्तिबो-

धकैस्त्रयोदश्यस्तग इत्यादिवाक्यैरेवोत्तराग्रहणे सिद्धे माघासित इत्यस्य वैयर्थ्यमेवेति वाच्यम् । कालतत्त्वविवेचनोक्तदिशा सामान्यवाक्यानामपि रात्रिव्याप्तावेव तात्पर्येण दिनद्वये निशीथाव्याप्तावपि कदाचित् पूर्वदिनेऽधिकरात्रव्याप्तौ सामान्यवाक्यैरेव पूर्वाग्रहणे प्राप्ते तद्वारणाय तत्सार्थक्यात् । समव्याप्तौ परदिनेऽधिकरात्रिव्याप्तौ वा यथा प्रदोषव्याप्तिबोधकसामान्यवाक्यैः परागृहणं प्राप्नोत्येवं माघकृष्णचतुर्दशीमात्रविषयकैः प्रतिपदोक्तैः पूर्वविद्धाग्राह्यत्वप्रतिपादकवचनैः पूर्वागृहणमपि प्राप्नोतीति तन्नियामकतया तत्सार्थक्याच्च । यो यस्य विहितः काल इति वचनं तु सामान्यव्रतविषयमिति स्पष्टमेव । बहुकर्मकालव्यापिनी इत्यादिहेमाद्रिग्रन्थस्याशयस्तु द्वैतनिर्णयवक्तव्यावसरे निरूपित एवेति दिक् ।

व्रतार्ककारस्तु प्रोवाच ( दिनद्वये निशीथव्याप्तौ परा, प्रदोषव्याप्तिलाभात्, निशाद्वये चतुर्दश्याम् , आदित्यास्तमये, त्रयोदशी यदा देवि, प्रदोषव्यापिनी ग्राह्या, अहोरात्रव्रतं यच्च, इतिवचनाच्च ) इति ।

तत्र यद्वक्तव्यं तन्मयूखवक्तव्यावसरे निरूपितम् । कालतत्त्वविवेचनकारेणापि बहु समाहितमिति नात्र तदभिधानस्यावश्यकत्वमिति ।

निर्णयचिन्तामणिकारस्तु ( यदापि दिनद्वये निशीथव्यापिनी तदापि पूर्वविद्धैव ग्राह्या । जयायुक्तायामेव विधानात् । त्रयोदशी यदा देवि, जयन्ती शिवरात्रिश्च, कृष्णपक्षेऽष्टमी चैव, इत्यादिपूर्वविद्धाप्रतिपादकवाक्यान्यप्यस्मिन्नेव विषये योज्यानि । माघासित, इति तु दिनद्वयेऽप्यर्द्धरात्रस्पर्शाभावे बोद्धव्यम् । एवमन्यान्यपि परविद्धाप्रतिपादकानि वाक्या-

नि दिनद्वये निशीथास्पर्शं योज्यानि । केचित्तु मोक्षमार्गरतानां च यतीनामूद्‌र्ध्वरेतसाम् । तेषामेव तु सा प्रोक्ता सामावास्या चतुर्दशी. इति विश्वरूपनिबन्धे नन्दिकेश्वरनाम्ना लिखितवचनबलात् परविद्धाप्रतिपादकवाक्यानि यत्यादिविषयाणीति व्यवस्थापयन्ति ) इतिव्यवातिष्ठिपत् ।

तस्यायं भावः । मोक्षमार्गरतानाम्. इतिवक्ये माघकृष्णेत्यादिविशेषानुपादेन तद्वाक्यबलात्प्रतिपदोक्तपूर्वविद्धाप्रतिपादकवाक्यानां बाधकल्पनं न युक्तमिति । एतद्बोधनायैव प्रथमं केचिदिति, अग्रे च नाम्ना लिखितमिति च पदं स्वारस्येनोपपद्यते इति दिक् ।

कीर्त्तिप्रकाशकारोऽपि ( यदा दिनद्वयेऽद्धरात्रव्याप्तिस्तिथिवृद्धया भवति तदापि पूर्वैव, जयायोगस्य प्राशस्त्यात् । महताम-

पि पापानाम् इत्यादिवाक्याच्च ) इत्याह ।

अग्निपुराणे तु ( शिवरात्रिव्रतं वक्ष्ये भुक्तिमुक्तिप्रदं शृणु । माघफाल्गुनयोर्मध्ये कृष्णा या तु चतुर्दशी । कामयुक्ता तु सोपोष्या कुर्वन् जागरणं व्रती) इत्युक्तम् ।

तिथितत्त्वकारस्तु(यद्येकतरदिने प्रदोषनिशीथोभयव्याप्तिरन्यस्मिन् दिवसे चैकव्याप्तिस्तर्हुभयव्याप्त्यनुरोधाद्यस्मिन् दिने उभयव्याप्तिः सैवोपोष्या) इति निर्द्धारयन् दिनद्वये निशीथव्याप्तावर्थात् परैवेत्येव निश्चिकाय ।

तत्र यद्वक्तव्यं तन्निर्णयसिन्धुवक्तव्यावसरेऽभिहितम् ।

शिवरात्रिविवेककारस्तु (यदा साकल्येन दिनद्वयेऽप्यर्द्धरात्रव्याप्तिस्तदा शिवरात्रि व्रते भूतां कामविद्धां विवर्जयेत्, इत्यादिवचनैः परस्या, माघफाल्गुनयोर्मध्ये "असिता या चतुर्दशी । अनङ्गेन समायुक्ता कर्त्त-

व्या सा सदातिथिः इत्यादिवचनैः पूर्वस्या-
श्च ग्राह्यत्वप्रसक्तौ पूर्वविद्धैवेत्येवकारघटि-
तपादन्नवाक्यात्पूर्वविद्धैव, किं चैवकारघ-
टितवाक्येऽर्द्धरात्रात्पुरस्तादित्युक्त्याऽर्द्ध-
रात्रे तत्परस्ताद्वा जयाया अनुवृत्तौ न त-
द्वाक्यप्रवृत्तिरिति परैवेत्यर्थादेव सिद्धम्,
एवं च माघफाल्गुनयोः इत्यादीनि पू-
र्वविद्धाप्रतिपादकवाक्यान्यर्द्धरात्रात् पुर-
स्ताच्चेत् इतिवचनैकवाक्यतयाऽर्द्धरात्रात्
पूर्वं जयायोगविषयकाणि, शिवरात्रिव्रते
भूतां कामविद्धां विवर्जयेत् इत्यादीन्युत्त-
रविद्धाग्राह्यत्वप्रतिपादकानि वाक्यानि च
पारिशेष्यादर्धरात्रादूर्द्ध्वं जयायोगविषय-
काणि, अत एव युक्ता चेज्जयया इति दी-
पिकोक्तिः सङ्गच्छते, सङ्गच्छते च जन्माष्ट-
मीप्रकरणे महामान्यग्रन्थकारैरुद्धृतं पूर्व-
विद्धास्वरूपबोधकमष्टमी शिवरात्रिश्च ह्य-
र्द्धरात्रादधो यदि । दृश्यते घटिका या तु

पूर्वविद्धा प्रकीर्त्तिता, इतिवचनमपि स्वरसतः, एवं चार्धरात्रात् पुरस्तादपि जयायोगे प्रदोषनिशीथोभयव्याप्तिलाभात् परैवेति केषांचिदुक्तिस्तथैव लौकिकं वाक्यं स्मृतिबाधे परित्यजेत्, इतिवचनास्पदमेव भवतीत्यवधेयम्) इत्याचख्यौ।

तिथ्यालोककारोऽपि निशाद्वये चतुर्दश्याम्, इतिवचनबलात् प्रदोषनिशीथोभयव्याप्तिबलाच्च दिनद्वये निशीथव्याप्तौ परैव) इति व्यवातिष्ठिपत्।

अत्र यद्वक्तव्यं तन्निर्णयसिन्धुवक्तव्यावसरे पुरुषार्थचिन्तामणिवक्तव्यावसरे चाभिहितम्।

शिवविद्यातत्त्वप्रकाशिकायां तु त्रयोदशीयोगस्यातिप्रशस्तत्वमभिहितम्। तथाहि। (विजये। महानिशां त्रिधाभज्य द्वितीयांशं त्रयोदशी। पश्चाच्चतुर्दशीयुक्ता सा चोमा शिवरात्रिका। किरणे। अर्धरात्राद-

स नग्रा कमलेक्षणे । कलामालं सिनीवाली सा रात्रिः कर्मनाशिनी । त्रयोदश्यां चतुर्दश्या निशि मिश्रणमुत्तमम् । चतुर्दशी त्वमाविद्धा प्राणहानिं च कारयेत् । उषश्चतुर्दशी रात्रौ शिवसायुज्यगामिनी । अमाचतुर्दशीं पूज्य रौरवं नरकं व्रजेत् । योगजे । चतुर्दशी त्वमाविद्धा प्राणहीनशरीरवत् । चतुर्दशी तु संपूर्णा कुहूतिथ्या समन्विता । तत्र जागरणं नृणां ब्रह्महत्यासमं भवेत् । अमाचतुर्दशीं पूज्य रौरवं नरकं व्रजेत् । कामिके मोक्षसाधनविवरणे । कुम्भगते दिवानाथे कृष्णे या च चतुर्दशी । महानिशामतिक्रम्य वर्त्तते चेच्छिवात्मिका । सा रात्रिर्ज्ञानदा पुंसां भोगमोक्षप्रदायिनी) इति ।

एतेषां चोच्चावचवाक्यानां व्यवस्था ग्रन्थकारैः स्वस्वप्रतिभावैचित्र्याद् यद्यप्यनेकधोक्ता । तथापि दिनद्वये निशीथव्याप्तौ त्रयोदशीयुतैव प्रशस्ता कुहूयुक्ता तु नि-

न्द्वोत्यत्रैवार्थवादादिविधया सर्वेषां वच-
नानामुपसंहार इति युक्तमुत्पश्यामः ।

॥ इति व्रततिथिविचारः ॥



# अथ शिवरात्रिव्रतप्रयोगः ।

त्रयोदश्यां कृतैकभक्तश्चतुर्दश्यां कृतनित्यक्रियः प्रातर्मन्त्रेण संकल्पं कुर्यात्। शिवरात्रिव्रतं ह्येतत्करिष्येऽहं महाफलम्। निर्विघ्नमस्तु मे चात्र त्वत्प्रसादाज्जगत्पते । चतुर्दश्यां निराहारो भूत्वा शम्भो परेऽहनि । भोक्ष्येऽहं भुक्तिमुक्त्यर्थं शरणं मे भवेश्वरेति। द्विजस्तु रात्रीं प्रपद्ये जननीमित्यृचां वा पठित्वा जलमुत्सृजेत् । ततः सायान्हे कृष्णतिलैः स्नानं कृत्वा धृतभस्मत्रिपुण्ड्ररुद्राक्षो निशामुखे शिवायतनं गत्वा क्षालितपादः स्वाचान्त उदङ्मुखो देशकालौ संकीर्त्य शिवरात्रौ प्रथमयामपूजां करिष्ये इति यामचतुष्टये पूजाचतुष्टयचिकीर्षायां संकल्पः । सकृत्पूजाचिकीर्षायां श्रीशिवप्रीत्यर्थं शिवरात्रौ श्रीशिवपूजां करिष्ये इति संकल्पः। तत्रादौ सामान्यतः पूजाविधिरुच्यते । यामभेदेन विशेषस्तु वक्ष्यते । अस्य श्रीशिवपञ्चाक्षरमन्त्रस्य वामदेव ऋषिरनुष्टुप् छन्दः श्रीसदाशिवो देवता न्यासे पूजने जपे च विनियोगः। वामदेवाय ऋषये नमः शिरसि । अनुष्टुप्छन्दसे नमो मुखे । श्रीसदाशिवदेवतायै नमो हृदि। ओं नं तत्पुरुषाय नमो हृदये। ओं मं अघोराय

नमः पादयोः । ओं शिं सद्योजाताय नमो गुह्ये । ओं वां वामदेवाय नमो मूर्ध्नि । ओं यं ईशानाय नमो मुखे । ओं ओं हृदयाय नमः । ओं नं शिरसे स्वाहा । ओं मं शिखायै वषट् । ओं शिं कवचाय हुं । ओं वां नेत्रत्रयाय वौषट् । ओं यं अस्त्राय फट् । कुम्भपूजां विधाय । ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं रत्नाकल्पोज्ज्वलाऽङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् । पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् । इति ध्यात्वा प्राणप्रतिष्ठां कृत्वा स्थाप्यलिङ्गं स्पृशन्, ओं भूः पुरुषम् साम्बसदाशिवमावाहयामि।ओं भुवः पुरुषं साम्ब० ओं स्वः पुरुषं साम्ब० ओं भूर्भुवः स्वः पुरुषं साम्ब० इत्यावाहयेत् । स्वामिन्त्सर्वजगन्नाथ यावत्पूजावसानकम् । तावत्त्वं प्रीतिभावेन लिङ्गेऽस्मिन्त्संनिधौ भवेति पुष्पाञ्जलिं दद्यात । स्थावरलिङ्गे पूर्वसंस्कृतचरलिङ्गे च प्राणप्रतिष्ठाद्यावाहनान्तं न कार्यम् । ओं सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः, ओं नमः शिवाय श्रीसाम्बसदाशिवाय नमः आसनं समर्पयामि । स्त्री शूद्रश्चेत् । ओं नमः शिवायेति पञ्चाक्षरस्थाने श्रीशिवाय नम इति नमोन्तमन्त्रेण पूजयेत् । ओं भवे भवे नातिभवे भवस्व माम्, ओं नमः शिवाय श्रीसाम्बसदाशिवाय नमः पाद्यं समर्पयामि । ओं भवोद्भवाय नमः ओं नमः शिवाय श्रीसाम्ब० अर्घ्यम्० । ओं वामदेवाय नमः ओं नमः शिवाय श्रीसा० आचमनीयम्० । ओं

घोभूतयुक्ता यत्र चतुर्दशी । सा रात्रिः शिवरात्रिः स्यात्तद्रात्रौ शिवमर्चयेत् । कारणे। त्रयोदशी दिवा पूर्णा रात्रौ चैव चतुर्दशी । उत्तमा शिवरात्रिः स्यात्तद्रात्रौ शिवमर्चयेत् । त्रयोदशीसमायुक्ता चतुर्दश्येव शस्यते । विजयागमे । त्रयोदशी शिवामूर्त्तिः शिवदेहश्चतुर्दशी । तयोः समागमः पुण्यः शिवयोगः स उच्यते । सूक्ष्मे । उदयादुदयान्तं तु ह्यहोरात्रं चतुर्द्दशी । मध्यमाऽत्र विधानज्ञः पूजयेत्परमेश्वरम् । आगमान्तरे । मध्यमा शिवरात्रिः स्यादहोरात्रं चतुर्दशी । ललिते । त्रयोदशी च सम्पूर्णा याममात्रं चतुर्दशी । सा रात्रिः शिवरात्रिः स्यत्तद्रात्रौ शिवमर्चयेत् । विजये । रात्रावष्टमभागस्था त्रयोदश्यां चतुर्दशी । मिश्रिता यदि सा श्रेष्ठा शिवरात्रिर्वरानने । वातुले । पूर्णा त्रयोदशी वत्स घटिकैका चतुर्दशी । सा रात्रिः शिवरात्रिः स्यात्तद्रात्रौ

शिवमर्चयेत् । कामिके । पूर्णा त्रयोदशी रात्रौ कलामात्रं चतुर्दशी । सा रात्रिः शिवरात्रिः स्यात्पूजायामुत्तमोत्तमा । आगमान्तरे । सा चैव त्रिविधा ज्ञेया ह्युत्तमा मध्यमाऽधमा । मुख्या त्रयोदशीयुक्ता सपर्वा चाधमाधमा । मध्यमा शिवरात्रिः स्यादहोरात्रं चतुर्दशी । शिवरहस्ये । त्रयोदशी कलाप्येका मध्ये चैव चतुर्दशी । अन्ते चैव सिनीवाली त्रिस्पृश्यां शिवमर्चयेत् । सुप्रभेदे वातुले च । अमायुक्तचतुर्दश्यां न कुर्वीत शिवार्चनम् । प्रमादात्कुरुते यस्तु कर्मविध्वंसहेतुकम् । तद्दोषशमनार्थाय अघोराख्यं शतं हुनेत् । कामिके । हित्वा त्रयोदशीमिश्रां दर्शयुक्तां प्रकुर्वते । सा रात्रिर्भयदा पुंसां नृपस्य चलनं भवेत् । त्रयोदशी भगाकारा लिङ्गाकारा चतुर्दशी । तयोः समागमः पुण्यः शिवयोगः स उच्यते । संताने । चतुर्दशीरजन्यां तु

ज्येष्ठाय नमः ओं नमः शिवाय श्रीसाम्ब० स्नानम्। ततो मूलमन्त्रेण आप्यायस्वेत्यादिभिश्च पञ्चामृतैः संस्नाप्य, आपो हिष्ठेति तिसृभिः शुद्धोदकेन प्रक्षाल्यैकादशावृत्त्यैकावृत्त्या वा रुद्रेण पुरुषसूक्तेन च चन्दनकुङ्कुमकर्पूरवासितजलेनाभिषेकं कृत्वा, ओं नमः शिवायेतिस्नानान्ते आचमनं दत्वा साक्षतजलेन तर्पणं कार्यम्। ओं भवं देवं तर्पयामि। शर्वं देवं त०। ईशानं देवं तर्पयामि। पशुपतिं देवं त०। उग्रं देवं त०। रुद्रं देवं त०। भीमं देवं त०। महान्तं देवं त०। भवस्य देवस्य पत्नीं तर्पयामि। शर्वस्य देवस्य पत्नीं०। ईशानस्य देवस्य पत्नीं०। पशुपतेर्देवस्य प०। उग्रस्य देवस्य प०। रुद्रस्य देवस्य प०। भीमस्य देवस्य प०। महतो देवस्य प०। ओं ज्येष्ठाय नमः ओं नमःशिवाय श्रीसा० वस्त्रम्०। मूलेनाचमनम्०। ओं रुद्राय नमः ओं नमः शिवाय श्रीसाम्ब० यज्ञोपवीतम्०। मूलेनाचमनम्। ओं कालाय नमः ओं नमः शिवाय श्रीसाम्ब० चन्दनम्। ओं कलविकरणाय नमः ओं नमः शिवाय श्रीसाम्ब० अक्षतान्। ओं बलविकरणाय नमः ओं नमः शिवाय श्रीसाम्ब० पुष्पाणि०। सहस्रमष्टोत्तरशतं वा सहस्रादिनामभिर्मूलमन्त्रेण वा बिल्वपत्त्राणि दद्यात्। ओं बलाय नमः ओं नमः शिवाय श्री० धूपम्०। ओं बलप्रमथनाय० ओं नमः शिवाय श्री साम्ब० दीपं स०। ओं सर्वभूतदमनाय नमः ओं नमः शिवाय श्री साम्ब० नैवेद्यम्। मूलेनाचमनं फलं च। ओं मनोन्मनाय० ओं नमः शिवाय श्रीसाम्ब० ताम्बूलम्०। मूलेन वैदिकैर्मन्त्रैश्च नीराजनम्०।

ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदा शिवोम्, ओं नमः शिवाय श्रीसाम्ब० मन्त्रपुष्पम्०। भवाय देवाय नमः शर्वाय देवायेत्याद्यष्टौ, भवस्य देवस्य पत्न्यै इत्याद्यष्टौ नमस्कारान्कृत्वा, शिवाय नमः रुद्राय० पशुपतये० नीलकण्ठाय० महेश्वराय० हरिकेशाय० विरूपाक्षाय० पिनाकिने० त्रिपुरान्तकाय० शम्भवे० शूलिने० महादेवाय० इति द्वादशनामभिर्द्वादश पुष्पाञ्जलीन्दत्वा मूलेन प्रदक्षिणानमस्कारान्कृत्वा मूलमन्त्रमष्टोत्तरशतं जप्त्वा. क्षमापयित्वाऽनेन पूजनेन श्री साम्बसदाशिवः प्रीयतामिति निवेदयेत्। अथ चतुर्षु यामेषु पूजाचतुष्टये विशेषः। तत्र प्रथमयामे मूलमन्त्रान्ते श्रीशिवायासनं समर्पयामीति शिवनाम्ना सर्वोपचारसमर्पणम्। द्वितीययामे शिवरात्रौ द्वितीययामपूजां करिष्य इति संकल्प्य श्रीशङ्करायासनं समर्पयामीति शङ्करनाम्ना। ततो महानिशि पूजां करिष्ये इति संकल्प्य, पूर्ववत्पूजा। ततस्तृतीययामपूजां करिष्य इत्युक्त्वा श्रीमहेश्वरायासनमित्यादिमहेश्वरनाम्ना। एवमेव चतुर्थयामे श्रीरुद्रायेति रुद्रनाम्ना। प्रतियामं तैलेनाभ्यङ्गः पञ्चामृतोष्णोदकश्रृतधोदकगन्धोदकाभिषेकाश्च कार्याः। यज्ञोपवीतान्ते गोरोचनकस्तूरीकुङ्कुमकर्पूरागुरुचन्दनमिश्रितानुलेपेन लिङ्गं लेपयेत्। पञ्चविंशतिपलमितः सर्वोऽनुलेप इत्यनुलेपपरिमाणम्, यथाशक्ति वा। धत्तूरकरवीरकुसुमैर्बिल्वपत्त्रैश्च पूजनमतिप्रशस्तम्। पुष्पाभावे शालितण्डुलगोधूमयवैः पू-

जा। नैवेद्योत्तरं ताम्बूलमुखवासावुक्तौ। नागवल्लीदलक्रमुकफलशुक्त्यादिचूर्णेतित्रयं ताम्बूलसंज्ञम्। एतदेव नारिकेरकर्पूरैलाकङ्कोलैः सहितं मुखवाससंज्ञम्। एतेषामन्यतमद्रव्यालाभे तत्तद्द्रव्यं स्मरेद्बुधः। सर्वपूजान्ते प्रार्थना। नित्यनैमित्तिकं काम्यं यत्कृतं तु मया शिव। तत्सर्वं परमेशान मया तुभ्यं समर्पितमिति। शिवरात्रिव्रतं देव पूजाजपपरायणः। करोमि विधिवद्दत्तं गृहाणार्घ्यं नमोस्तुते इत्यर्घ्यः। एवं यामचतुष्टयेऽर्घ्यभेदः कौस्तुभे। ततः प्रभाते स्नात्वा पुनः शिवं संपूज्य पूर्वोक्तद्वादशनामभिर्द्वादश ब्राह्मणानशक्तावेकं वा संपूज्य, तिलपक्वान्नपूर्णान् द्वादशकुम्भानेकं वा दत्वा व्रतमर्पयेत्। यन्मयाद्य कृतं पुण्यं तद्रुद्रस्य निवेदितम्। त्वत्प्रसादान् महादेव व्रतमद्य समर्तितम्। प्रसन्नो भव मे श्रीमन् सद्गतिः प्रतिपाद्यताम्। त्वदालोकनमात्रेण पवित्रोऽस्मि न संशय इति। ततो ब्राह्मणान् भोजयित्वा पूर्वनिर्णीते काले स्वजनैः सह पारणं कुर्यात्। तत्र मन्त्रः। संसारक्लेशदग्धस्य व्रतेनानेन शङ्कर। प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भवेति।

## ॥ इति शिवरात्रिव्रतविधिः ॥

---

## ॥ इति शिवरात्रिव्रतविधिः ॥

अथ मृन्मयलिङ्गे शिवपूजाचिकीर्षायां तद्विधिः। ॐ हराय नम इति मृदमाहृत्य शोधितायां तस्यां जलप्रक्षेपेण संपीड्य तेन पिण्डेन ॐ महेश्वराय नम इति लिङ्गं कुर्यात्। तच्च लिङ्गमशीतिगुञ्जात्मककर्षादधिकपरिमाणाङ्गुष्ठमात्रं ततोऽधिकं वा कार्यं न न्यूनम्। मृन्मयलिङ्गे पञ्चसूत्रसंपादनाभावेऽपि न दोषः। अत एव सस्कत्वस्कलारूढं वृद्धिमेति न हीयते। बाणलिङ्गमिति प्रोक्तं शेषं नार्मदमुच्यते। इत्युक्तलक्षणाद्वाणलिङ्गादतिदुर्लभाद् दुःसंपाद्यपञ्चसूत्रसंपादनात्सुवर्णादिलिङ्गाच्च मृन्मयलिङ्गं श्रेष्ठम्। द्वापरे पारदं श्रेष्ठं पार्थिवं तु कलौ युग इति वचनाच्च। ततः ॐ शूलपाणये नमः शिव इह प्रतिष्ठितो भवेति सबिल्वपत्रे पूजापीठे प्रतिष्ठाप्य, ध्यायेन्नित्यं महेशमिति ध्यात्वा, ओं पिनाकधृषे नमः श्रीसाम्बसदाशिव इहागच्छेह प्रतिष्ठेह सन्निहितो भवेत्यावाहयेत्। इह द्विजानां सर्वत्र मूलमन्त्रोऽपि ज्ञेयः। तत ओं नमः शिवायेति मूलमन्त्रेण पाद्यमर्घ्यमाचमनं दत्वा पशुपतये नम इति मूलेन च स्नानं वस्त्रमुपवीतं गन्धपुष्पं धूपदीपनैवेद्यफलताम्बूलनीराजनमन्त्रपुष्पाञ्जलीन्दत्वा,श-

र्वाय क्षितिमूर्तये नम इति प्राच्यां पूजयेत्। भवाय जलमूर्तये नम इतीशान्याम् । रुद्रायाग्निमूर्तये नम इत्युदीच्याम्। उग्राय वायुमूर्तये नम इति वायव्याम्।भीमायाकाशमूर्तये नम इति प्रतीच्यां पशुपतये यजमानमूर्तये नम इति नैर्ऋत्याम्। महादेवाय सोममूर्तये नम इति दक्षिणस्याम्। ईशानाय सूर्यमूर्तये नम इत्याग्नेय्याम् । ततः स्तुत्वा नमस्कृत्य महादेवाय नम इति विसर्जयेदिति संक्षेपः ।

## ॥ इति पार्थिवपूजाविधिः ॥



# अथ शिवरात्रिव्रतोद्यापनविधिः ।

स्कन्दपुराणे । चतुर्दशवर्षात्मकं यावज्जीवं वा माघे कृष्ण-चतुर्दश्यां निशीथव्यापिन्यां कार्यम् । तिथ्यादि संकीर्त्य, आत्मनः सर्वपापक्षयपूर्वकाक्षयभोगमोक्षप्राप्त्यर्थमाचरितशिवरात्रिव्रतोद्यापनं करिष्ये । वृताचार्यः अन्यैर्द्वादशब्राह्मणैः सह पूजामारभेत् । द्वादशलिङ्गोद्भवे पीठे उक्तविधिना ब्रह्मादिदेवताः सम्पूज्य द्वादशलिङ्गेषु द्वादशकलशान्मध्ये एकं तदुपरि पूर्णपात्राणि निधाय तत्र हैमीः प्रतिमाः पूजयेत् । तत्र मध्यमकुम्भे उमामहेश्वरं त्र्यम्बकमिति मन्त्रेण प्रतिष्ठाप्य पुरतो राजतं वृषभं च प्रतिष्ठापयेत् । द्वादश ब्राह्मणान् द्वादशलिङ्गस्थकलशेषु द्वादश प्रतिमाः पूजयेयुः । तत्र प्राच्यां महेशमघोरं पशुपतिम् । दक्षिणस्यां पञ्चवक्त्रमुग्रं रुद्रम् । पश्चिमायां भवं शर्वं शम्भुम् । उत्तरे शिवं भीमं भीमपराक्रमं प्रतिकलशम् । परितो लोकपालान् । इति प्रतिष्ठाप्य, रुद्राभिषेकपूर्वकं षोड़शोपचारैः पूजयेत् । प्रतियामं पूजा कार्या एकैव वा, पुराणपाठादिना रात्रिं निनयेत् । प्रातरग्निं प्रतिष्ठाप्य अन्वादध्यात् । अत्र प्रधानमुमामहेश्वरं पायसबिल्वपत्रतिलदूर्वाघृतद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिर्द्वादशकलशस्थदेवता अष्टाष्टसंख्याकाहुतिभिस्तैरेव द्रव्यैः

परिवारदेवता ब्रह्मादिदेवतायैकैकयाज्याहुत्या यच्चे । एवं होमं सम्पाद्य पीठदेवतां पूजयेत् । अथोङ्गपू० । शर्वाय० पादौ० । पशुपतये० ऊरू० । रुद्राय० कटिम्० । शर्वाय० बाहू० । सद्योजाताय० कण्ठम्० । शम्भवे० मुखम्० । वामदेवाय० चक्षुषी० । भीमाय० भ्रुवौ० । उमापतये० ललाटम्० । सर्वव्यापिने० मूर्धानम्० । तत आचार्यं द्वादशब्राह्मणांश्च वस्त्रादिना संपूज्य, तेभ्यः प्रतिमासहितकलशान् दद्यात् । तत्र मन्त्रः । शम्भो प्रसीद देवेश सर्वलोकेश्वर प्रभो तव रूपप्रदानेन मम सन्तु मनोरथाः । ततो व्रतपूर्तये त्रयोदश गाः । अथ वा एकां गामचार्यायान्येभ्यो दक्षिणां दद्यात् ब्राह्मणान् सन्तर्प्य स्वयं भुञ्जीत ।

॥ इति संक्षिप्तोद्यापनविधिः ॥



## ॥ भाषा में निर्णय का सारांश ॥

सब का सारांश यही है कि यह शिवरात्रिका व्रत मनुष्यमात्र को अवश्य करना चाहिये क्योंकि इसके न करने में बड़ा भारी पाप लिखा है, तो अब इसका निर्णय होना भी आवश्यक है, और निर्णयका हाल यह है कि प्राचीन बड़े बड़े ग्रन्थकार लोग (अर्थात् माधवाचार्य हेमाद्रि आदि) भी इसके विषय में ऐसा लिख गए कि जिसका निपटाना अब के मनुष्यों को दुस्तर हुआ इतनाहीं नहीं किन्तु उस लेख का अवलोकन व्यामोह भी यहां तक दे रहा है कि बराबर आज तक परस्परविरुद्ध सैकड़ों ग्रन्थ छोटे मोटे उन्हीं ग्रन्थों व युक्तियों को ले ले के बनते चले जाते हैं। और भी धर्म के विषयों में इसी तरह ग्रन्थकार लोग अपनी अपनी बुद्धिमानी दिखाते २ लोगों को भरपूर व्यामूढ़ कर देते हैं। तो अब ऐसे विरुद्ध विषय में सिवाय किसी एक पर बिना श्रद्धा किये निर्णय होना बड़ा दुस्तर होगा, क्यों कि युक्तियों की झाड़ झपट धर्म के विषय में दिखाना ठीक नहीं, क्योंकि उसकी उत्तमता तो केवल मनुष्यों के चालांकी पर है। और लोग भी ऐसाही बर्त्ताव बराबर करते हैं,

क्योंकि बङ्गाली लोग सिवाय रघुनन्दनभट्टाचार्य आदि अपने स्वदेशीय लोगों के और किसी के युक्तियों पर धर्म के विषय में कभी श्रद्धा नहीं करते, मैथिल लोग भी वाचस्पति आदि स्वदेशीय लोगों ही को धर्म के विषय में मानते हैं, दक्षिणी लोग भी माधवाचार्य आदि स्वदेशीय लोगों हीं का धर्मविषय में विश्वास करते हैं, तो अवश्य मध्यदेशीय (अर्थात् कान्यकुब्ज सारस्वत गौड़ नागर गुर्जर आदि) लोगों को भी अवश्य अपने २ ग्रन्थों को खोज के उन पर श्रद्धा करना चाहिये, हां जिस विषय में अपना स्वदेशीय ग्रन्थ नहीं मिल सकेगा तो लाचारी से दूसरे का अवलम्ब करना पड़ेगा. पर उस में भी जो जहां तक अन्तरङ्ग होगा उसी पर श्रद्धा उचित समझी जावेगी, न कि अन्तरङ्ग के रहते बहिरङ्ग पर। इसलिये शिवरात्रि प्रकरण में जिस विषय में ग्रन्थकारों का विशेष झगड़ा है वह विषय बहुत से ग्रन्थों से लेके एकत्र करके इसमें रख दिया है कि जिसमें केवल इसी ग्रन्थ के संपादन कर लेने से प्रायः सब लोगों को अपने २ श्रद्धा के ग्रन्थों का हाल मालूम हो जाय, और बहुत से ग्रन्थों के एकत्र करने का परिश्रम भी उठाना न पड़े।

विषय यह है कि फागुन बदी चौदस को जो शिवरात्र का व्रत व विशेष शिवपूजन आदि होता है उसमें कैसी चतुर्दशी लेनी चाहिये। तो कोई ग्रन्थ में लिखा है कि जिसदिन सायंकाल में चतुर्दशी मिले उसदिन व्रत आ-

दि करना चाहिये। कोई कहते हैं कि यह निर्णय और महीने के कृष्णचतुर्दशी का है, क्योंकि फागुन बदी चतुर्दशी के आधीरात को शिवजी का प्रगट होना पुराणों में लिखा है तो यह चौदस आधीरात को जिस दिन मिले उसी दिन व्रत आदि करना चाहिये, आधी रात का प्रमाण रातके ठीक बीचोबीच ४८ मिनटका है। यदि दो दिन में आधीरात में चौदस मिले तो पहिले दिन व्रत आदि करना या दूसरे दिन करना यही बड़ा भारी झगड़े का मौका है, सोभी इसमें सविस्तर दिखाया है, तो जो जिस ग्रन्थ व युक्ति का श्रद्धालु होगा सो उसके अनुसार करेहीगा. पर मुझको तो हेमाद्रि आदिही के कहने में श्रद्धा होती है, जिनने कि ऐसे मोके पर पूर्वही दिन में व्रत आदि करना लिखाहै, क्योंकि अभीतक मेरे मन में उन्ही की कही युक्तियां अच्छी मालूम पड़ती हैं। इति।





॥ श्रीः ॥

# ॥ शिवाकाण्डताण्डवस्यानुक्रमपत्त्रम् ॥

